जलम् । वाहयेत्तु जलाभ्यर्णे अपुष्टसेकसम्भवैः । शारदसूत्रकैःस्थाने कलम्बादि वपेद्बली । अर्थीभूतासु कार्पासं तदन्यत्र तु हैमनम् । वसन्तग्रीष्मकालीय मप्सु स्निग्धेषु नाह्वदः । केदारेषु तथा शालीन् जलोपान्तेषु चेक्षुकान् । तुन्नाकशाकमूलानि कन्दानि च जलान्तिके । दृष्टिविश्रान्तपानीयक्षेत्रेषु च यवादिकान् । गोधूमांश्च मसूरांश्च खल्वान् खलकुलन्तथा । समस्निग्धेषु चोप्यानि भूमिजीयान् विजानता । तिला बहुविधाश्चोप्या अतसीशणमेव च । स्थलेष्वतो जगत्सर्वं वापयेत्कृषिकृत्तरः । सम्पश्येच्चरतः सर्वान् गोरूपादीन् स्वयङ्कृषी । चिन्तयेत्सर्वमात्मानं स्वयमेव कृषिं व्रजेत् । प्रथमं कृषिवाणिज्यं द्वितीयं योनिपोषणम् । तृतीयं विक्रयं, यक्षं चतुर्थं राजसेवनम् । नखैर्विलिखने यस्याः अयुद्दोषं मनीषिणः । तस्याः सीरविदारेण किन्न पापं क्षितेर्भवेत् । तृणैकच्छेदमात्रेण प्रोच्यते क्षय आयुषः । अशङ्कुरकन्दनिर्यासादङ्कुरातश्ववेदघम् । यदघं मत्स्यबधानां तथा शकुनिनामपि । व्यंहः कुक्कुटिकानाञ्च तदेव कृषिजीविनाम् । बधकानाञ्च यत्पापं यत्पापं क्रमयोरपि । कदर्याणाञ्च यत्पापं तत्पापं कृषिजीविनाम् । वर्णानाञ्च म्लेच्छस्यानां कृषिकृत्सूपजीविनाम् । तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः । द्वादशो नवमो वापि सप्तमः पञ्चमोऽपि वा । धान्यभागः प्रदातव्यो देहिनः क्षेत्रिणो ध्रुवम् । ब्राह्मणाद्दूतभूमौ च त्रिशां वै क्षेत्रभुग्भवेत् । एकैकांशापकर्षः स्याद्यावद्ब्राह्मणसप्तमौ । ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः ॥ स स भागः प्रदातव्यो यतस्तौ कृषिभागिनौ । शूद्रौ च सर्वमात्राणां देयोऽंशः स्याच्चतुर्थशः । एकैकांशापकर्षस्तु यावद्ब्राह्मणसप्तमौ । ब्राह्मणस्तु कृषिं कुर्वन्वाहयेदिच्छया धराम् । न किञ्चित्कस्यचिद्दद्यात्स सर्वस्य प्रभुर्यतः । ब्रह्मा वै ब्राह्मणानां स्यात्प्रभुस्सत्त्वजदादितः । तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि । पशुपाल्याय गोत्पत्त्यै ऊरुभ्याञ्च तथा विशः । द्विजदास्याय पण्याय पद्भ्यां शूद्रमकल्पयत् । यत्किञ्चिज्जगती यत्र भूगेहाश्च गजादिकम् । स्वभावेनेह विप्राणां ब्रह्मा स्वयमकल्पयत् । ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ । न तयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षयेत् । तस्माद् ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम् । ग्रामेशस्य नृपस्यापि किञ्चिन्नित्यमसौ बलिम् । अथान्यत्वम्प्रवक्ष्यामि कृषिकृच्छ्रविकारणम् । संयुतः कर्षकोयेन स्वर्गलोकमवाप्नुयात् । सर्वसत्त्वोपकाराय सर्वत्र कृषिकृत्तरः । कुर्य्यात् कृषिं प्रयत्नेन सर्वसत्त्वोपजीव्यकृत् । सर्वस्य स्थितिकारणयात्र देवपितृभिः पुनः । मनुष्याणान्तु पोषाय कृषिं कुर्य्यात् कृषीवलः । वयांसि चान्यसत्त्वानि क्षुत्पिपासापीडितान् द्विजान् । विलोक्य सर्वतोपेभ्यः स्वर्गलोकमवाप्नुयात् । चतुर्दिक्षु खले कुर्य्यात् प्राच्यामतिघमाहतिम् । सैकद्वारपिधानाञ्च पिदध्याच्चैव सर्वतः । खरोष्ट्राजोरणांस्तत्र विशतस्तु निवारयेत् । श्वशूकरशृगालादिकाकोलूककपोतकान् । निरुध्य प्रोक्षणं कुर्य्यात् दानीयाभ्युक्षणाम्बुभिः । रक्षा च भस्मना कुर्य्याज्जलधाराभिरक्षणम् । निरुध्यमर्चयेत्सीतां पराशरकृषिं स्मरन् । प्रेतभूतादिनामानि न वदेच्च तदग्रतः । सूतिकाक्षवतत्र कर्त्तव्यं परिरक्षणम् । हरन्त्यरक्षितं यस्मात् रक्षांसि सर्वमेव हि । प्रशस्तं दिनपूर्वाह्णे नापराह्णे न सन्ध्ययोः । धान्योन्मानं सदा कुर्य्याद्गीतापूजनपूर्वकम् । यजेत खलभिक्षाभिः खलेरोहितयएव हि । भक्त्या सर्वं प्रदत्तं हि तत्सम्यक्समिहाक्षयम् । खलयज्ञदक्षिणैषा ब्रह्मणा निर्मिता पुरा । भागधेयमयीं कृत्वा तां म्लेच्छेभ्योऽह मालिकाम् । शतक्रत्वादयो देवाः पितरः सोमपादयः । सनकादिमनुष्याश्च ये चान्ये दक्षिणाशनाः । तानुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथमं कृषी । विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च । पुत्रं जाते व्यतीपाते दत्तं भवति चाक्षयम् । अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः । दीनानामप्यनाथानां कुष्ठिनां कुमारीरिणाम् । क्लीबान्धबधिरादीनां सर्वेषामंश दीयते । वर्णानां पतितानाञ्च कुक्कुरादीनि तर्पयेत् । चाण्डालानाञ्च पाकानां प्रीत्यान्नञ्चावचादृतम् । ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः । स्तोकशः सौरिभिः सर्वे वर्णिभिरष्टकर्मिभिः । दत्त्वा त्वन्तरया वाचा क्रमेणाथ विसर्जयेत् । ततः कृत्वा स्वगृहं गच्छेच्छाह्मणभ्युदयं [illegible]रेत् । शरच्छन्नवसन्नवान्नैः श्राद्धमाचरेत् । नाकृत्वाऽन्नदशीयादन्नं स्तदघमश्नुते । कृष्यासुत्पाद्य धान्यानि खलयज्ञं समाप्य च । सर्वसत्त्वहिते युक्त इहामुत्र सुखी भवेत् । कृषेरन्यतमो धर्मो न भवेत् कृषितोऽन्यतः । न सुखं कृषितोऽन्यत्र यदि धर्मेण कर्षति । अपस्त्वं निरस्तत्वं कृषितो नैव जायते । अनातिथ्यञ्च दुष्टत्वं गोमतो न कदाचन । निर्धनत्वम-

वदेच्च परुषं न च कुर्य्यात् पतिमप्रियम्। न केनचिच्च विवदेत्प्रलापविवादिनी। न चार्थव्ययशीला स्यान्न धर्मार्थविरोधिनी। प्रमादोन्मादरोषेर्ष्यावञ्चनान्यतिनिन्दितम्। पैशुन्यहिंसाविद्वेषमोहाहङ्कारधूर्त्तताम्। नास्तिक्यसाहसस्तेयदम्भान् साध्वी विवर्जयेत्। एवं परिचरन्ती या पतिं परमदैवतम्। यशः शमिह यात्येव परत्र च सलोकताम्। योषितो नित्यकर्म्मोक्तं नैमित्तिकमथोच्यते। रजसो दर्शनादेषा सर्व्वमेव परित्यजेत्। सर्व्वैरपीक्षिता शीघ्रं लज्जितान्तर्गृहे वसेत्। एकाम्बरा कृशा दीना स्नानालङ्कारवर्जिता। स्वपेद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयम्। स्नायीत सा त्रिरात्रान्ते सचेलाभ्युदिते रवौ। विलोक्य भर्त्तृवदनं शुद्धा भवति धर्म्मतः। कृतशौचा पुनःकर्म पूर्व्ववच्च समाचरेत्। द्विजस्त्रीणामयं धर्म्मः प्रायोऽन्यासामपीष्यते। कृषिपण्यादि पुंकार्य्ये भवेयुस्ताः प्रसाधिताः। सङ्कीर्णसंधुरापैः स्वायत्तस्तु पतिर्यथा। भवेत्तथा चरेयुर्वै मायाभिः कामकेलिभिः। मृते भर्त्तरि सङ्गच्छेत् भर्त्त्रा वा पालयेद्व्रतम्।” भा०व०“द्रौपदीसत्यभामासंवादे”२३२अ० इतिवृत्तच्छलेन तस्याः पतिवशीकरणकर्म्मोक्तं यथा

“केन द्रौपदि! वृत्तेन पाण्डवानधितिष्ठसि?। लोकपालोपमान् वीरान् यूनः परमसंमतान्। कथञ्च वशगास्तुभ्यं न कुप्यन्ति च ते शुभे!। तव वश्या हि सततं पाण्डवाः प्रियदर्शने!। मुखप्रेक्षाश्च ते सर्व्वे तत्त्वमेतद्ब्रवीहि मे। व्रतचर्य्या तपो वास्ति स्नानमन्त्रौषधानि वा। विद्यावीर्य्यं मूलवीर्य्यं जपहोमागदास्तथा। ममाद्याचक्ष्व पाञ्चालि! यशस्यं भगदैवतम्। येन कृष्णे! भवेन्नित्यं मम कृष्णो वशानुगः?। एवमुक्त्वा सत्यभामा विरराम यशस्विनी। पतिव्रता महाभागा द्रौपदी प्रत्युवाच ताम्। असत्स्त्रीणां समाचारं सत्ये! मामनुपृच्छसि। असदाचरिते मार्गे कथं स्यादनुकीर्त्तनम्। अनुप्रश्नः संशयो वा नैतत्त्वय्युपपद्यते। तथा ह्युपेता बुद्ध्या त्वं कृष्णस्य महिषी प्रिया। यदैव भर्त्ता जानीयान्मन्त्रमूलपरां स्त्रियम्। उद्विजेत तदेवास्याः सर्पाद्वेश्मगतादिव। उद्विग्नस्य कुतः शान्तिरशान्तस्य कुतः सुखम्। न जातु वशगो भर्त्ता स्त्रियाः स्यान्मन्त्रकर्म्मणा। अमित्रप्रहितांश्चापि गदान् परमदारुणान्। मूलप्रवादैर्हि विषं प्रयच्छन्ति जिघांसवः। जिह्वया यानि पुरुषस्त्वचा वाप्युपसेवते। तत्र चूर्णानि दत्तानि हन्युः क्षिप्रमसंशयम्। जलोदरसमायुक्ताः श्वित्रिणः पलितास्तथा। अपुमांसः कृताः स्त्रीभिर्जडान्धबधिरास्तथा। पापानुगास्तु पापास्ताः पतीनुपसृजन्त्युत। न जातु विप्रियं भर्त्तुः स्त्रिया कार्य्यं कथञ्चन। वर्त्ताम्यहन्तु यां वृत्तिं पाण्डवेषु महात्मसु। तां सर्व्वां शृणु मे सत्यां सत्यभामे! यशस्विनि!। अहङ्कारं विहायाहं कामक्रोधौ च सर्व्वदा। सदारान् पाण्डवान्नित्यं प्रयतोपचराम्यहम्। प्रणयं प्रतिसंहृत्य निधायात्मानमात्मनि। शुश्रूषुर्निरभिमाना पतीनां चित्तरक्षिणी। दुर्व्याहृताच्छङ्कमाना दुःस्थिताद्दुरवेक्षितात्। दुरासिताद्दुर्व्रजनादिङ्गिताध्यासितादपि। सूर्य्यवैश्वानरसमान् सोमकल्पान्महारथान्। सेवे चक्षुर्हणः पार्थानुग्रवीर्य्यप्रतापिनः। देवो मनुष्यो गन्धर्व्वो युवा चापि स्वलङ्कृतः। द्रव्यवानभिरूपो वा न मेऽन्यः पुरुषो मतः। नाभुक्तवति नास्नाते नासंविष्टे च भर्त्तरि। न संविशामि नाश्नामि सदा कर्म्मकरेष्वपि। क्षेत्राद्वनाद्वा ग्रामाद्वा भर्त्तारं गृहमागतम्। प्रत्युत्थायाभिनन्दामि आसनेनोदकेन च। प्रमृष्टभाण्डा मृष्टान्ना काले भोजनदायिनी। संयता गुप्तधान्या च सुसंमृष्टनिवेशना। अतिरस्कृतसम्भाषा दुःस्त्रियो नानुसेवती। अनुकूलवती नित्यं भवाम्यनलसा सदा। अनर्म्मे चापि हसितं द्वारि स्थानमभीक्ष्णशः। अवस्करे चिरं स्थानं निष्कुटेषु च वर्जये। अतिहासातिरोषौ च क्रोधस्थानञ्च वर्जये। निरताहं सदा सत्ये! भर्त्तॄणामुपसेवने। सर्व्वथा भर्त्तृरहितं न ममेष्टं कथञ्चन। यदा प्रवसते भर्त्ता कुटुम्बार्थेन केनचित्। सुमनोवर्णकापेता भवामि व्रतचारिणी। यच्च भर्त्ता न पिबति यच्च भर्त्ता न सेवते। यच्च नाश्नाति मे भर्त्ता सर्व्वं तद्वर्जयाम्यहम्। यथोपदेशनिरता वर्त्तमाना वराङ्गने!। स्वलङ्कृता सुप्रयता भर्त्तुः प्रियहिते रता। ये च धर्म्माः कुटुम्बेषु श्वश्र्वा मे कथिताः पुरा। भिक्षा बलिः श्राद्धमिति स्थालीपाकाश्च पर्व्वसु। मान्यानां मानसत्कारा ये चान्ये विदिता मम। तान् सर्व्वाननुवर्त्तामि दिवारात्रमतन्द्रिता। विनयान्नियमांश्चापि सदा सर्व्वात्मना श्रिता। मृदून् सतः सत्यशीलान् सत्यधर्म्मानुपालिनः। आशीविषानिव क्रुद्धान् पतीन् परिचराम्यहम्। पत्याश्रयो हि मे धर्म्मो मतः स्त्रीणां सनातनः। स देवः सा गतिर्नान्या तस्य का विप्रियं चरेत्। अहं पतीन्नातिशये नात्यश्ने

नातिभूषये । नापि परिवदे श्वश्रूं सर्वदा परियन्त्रिता । अवधानेन सुभगे ! नित्योत्थिततयैव च । भर्त्तारो वशगा मह्यं गुरुशुश्रूषयैव च । नित्यमार्य्यामहं कुन्तीं वीरसूं सत्यवादिनीम् । स्वयं परिचराम्येतां पानाच्छादनभोजनैः नैतामतिशये जातु वस्त्रभूषणभोजनैः । नाहं परिवदे वाचं तां पृथां पृथिवीसमाम् । अष्टावग्रे ब्राह्मणानां सहस्राणि स्म नित्यदा । भुञ्जते रुक्मपात्रेषु युधिष्ठिरनिवेशने । अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः । त्रिंशद्दासीक एकैको यान् बिभर्त्ति युधिष्ठिरः । दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतम् । ह्रियते रुक्मपात्रीभिर्यतीनामूर्द्ध्वरेतसाम् । तान् सर्वानग्रहारेण ब्राह्मणान् ब्रह्मवादिनः । यथार्हं पूजयामि स्म पानाच्छादनभोजनैः । शतं दासीसहस्राणि कौन्तेयस्य महात्मनः । कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः । महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः । मणीन् हेम च बिभ्रत्यो नृत्यगीतविशारदाः । तासां नाम च रूपञ्च भोजनाच्छादनानि च । सर्वासामेव वेदाहं कर्म चैव कृताकृतम् । शतं दासीसहस्राणि कुन्तीपुत्रस्य धीमतः । पात्रीहस्ता दिवारात्रमतिथीन् भोजयन्त्युत । शतमश्वसहस्राणि दश नागायुतानि च । युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः । एतदासीत्तदा राज्ञो यन्मही पर्य्यपालयत् । येषां संख्याविधिञ्चैव प्रदिशामि शृणोमि च । अन्तःपुराणां सर्वेषां भृत्यानाञ्चैव सर्वशः । आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम् । सर्वं राज्ञः समुदयमायञ्च व्ययमेव च । एकाहं वेद्मि कल्याणि ! पाण्डवानां यशस्विनि ! । मयि सर्वं समासज्य कुटुम्बं भरतर्षभाः । उपासनारताः सर्वे घटन्ति स्म वरानने ! । तमहं भारमासक्तमनाधृष्यं दुरात्मभिः । सुखं सर्वं परित्यज्य रात्र्यहानि घटामि वै । अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम् । एकाहं वेद्मि कोषं वै पतीनां धर्मचारिणाम् । अनिशायां निशायाञ्च सहायाः क्षुत्पिपासयोः । आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे । प्रथमं प्रतिबुध्यामि चरमं संविशामि च । नित्यकालमहं सत्ये ! एतत् संवननं मम । एतज्जानाम्यहं कर्त्तुं भर्त्तुः संवननं महत् । असत्स्त्रीणां समाचारं नाहं कुर्य्यां न कामये । तच्छ्रुत्वा धर्मसहितं व्याहृतं कृष्णया तदा उवाच सत्या सत्कृत्य पाञ्चालीं धर्मचारिणीम् । अभिपन्नास्मि पाञ्चालि ! याज्ञसेनि ! क्षमस्व मे । कामकारः सखीनां हि सोपहासं प्रभाषितम्” २३२अ० ।

“द्रौपद्युवाच । इमन्तु ते मार्गमपेतमोहं वक्ष्यामि चित्तग्रहणाय भर्त्तुः । अस्मिन् यथावत् सखि ! वर्त्तमाना भर्त्तारमाच्छेत्स्यसि कामिनीभ्यः । नैतादृशं दैवतमस्ति सत्ये ! सर्वेषु लोकेषु सदेवकेषु । यथा पतिस्तस्य हि सर्वकामा लभ्याः प्रसादात् कुपितश्च हन्यात् । तस्मादपत्यं विविधाश्च भोगाः शय्यासनान्युत्तमदर्शनानि । वस्त्राणि माल्यानि तथैव गन्धाः स्वर्गश्च लोको विपुला च कीर्त्तिः । सुखं सुखेनेह न जातु लभ्यं दुःखेन साध्वी लभते सुखानि । सा कृष्णमाराधय सौहृदेन प्रेम्णा च नित्यं प्रतिकर्मणा च । तथाऽऽसनैश्चारुभिरग्र्यमाल्यैर्दाक्षिण्ययोगैर्विविधैश्च गन्धैः । अस्याः प्रियोऽस्मीति यथा विदित्वा त्वामेव संश्लिष्यति तद्विधत्स्व । श्रुत्वा स्वरं द्वारगतस्य भर्त्तुः प्रत्युत्थिता तिष्ठ गृहस्य मध्ये । दृष्ट्वा प्रविष्टं त्वरितासनेन पाद्येन चैनं प्रतिपूजयस्व । संप्रेषितायामथ चैव दास्यामुत्थाय सर्वं स्वयमेव कार्य्यम् । जानातु कृष्णस्तव भावमेतं सर्वात्मना मां भजतीति सत्ये ! । त्वत्सन्निधौ यत् कथयेत् पतिस्ते यद्यप्यगुह्यं परिरक्षितव्यम् । काचित् सपत्नी तव वासुदेवं प्रत्यादिशेत्ते न भवेद्विरागः । प्रियांश्च रक्तांश्च हितांश्च भर्त्तुस्तान् भोजयेथा विविधैरुपायैः । द्वेष्यैरपक्षैरहितैश्च तस्य भिद्यस्व नित्यं कुहकोद्यतैश्च । मदं प्रमादं पुरुषेषु हित्वा संयच्छ भावं प्रतिगृह्य मौनम् । प्रद्युम्नशाम्बावपि ते कुमारौ नोपासितव्यौ रहिते कदाचित् । महाकुलीनाभिरपापिकाभिः स्त्रीभिः सतीभिस्तव सख्यमस्तु । चण्डाश्च शौण्डाश्च महाशनाश्च चौराश्च दुष्टाश्चपलाश्च वर्ज्याः । एतद्यशस्यं भगदैवतञ्च स्वर्ग्यं तथा शत्रुनिवर्हणञ्च । महार्हमाल्याभरणाङ्गरागा भर्त्तारमाराधय पुण्यगन्धा” २३३अ० ।

“गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ” रघुः “न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते” उ०त० स्मृतिः “प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः” कुमा० “शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः । भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः” शकु० “अभ्यागताभ्योऽभिगृहं गृहिण्यः” माघः ।

गृहीत त्रि॰ ग्रह—कर्मणि क्त। १स्वीकृते, २ज्ञाते, ३प्राप्ते ४धृते च। "गृहीतपत्युद्गमनीयवेशा" कुमा॰। "गृहीत इव केशेषु मृत्युना धर्ममाचरेत्" नीतिशा॰ "पत्नी गृहीतव्रता" वेणी॰ भावे क्त। ५ग्रहणादौ न॰ ततः तदस्त्यस्मिन् इष्टादि॰ इनि। गृहीतिन् कृतग्रहणे त्रि॰ स्त्रियां ङीप्।

गृहीतगर्भा स्त्री गृहीतो गर्भो यया। गर्भवत्यां तल्लक्षणादि गर्भवतीशब्दे २५५५पृ॰ उक्तम्। [च हेमच॰।

गृहीतदिक् त्रि॰ गृहीता दिक् येन। १पलायिते २तिरोहिते

गृहु त्रि॰ ग्रह—कु। ग्रहीतरि "इदु भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय" ऋ॰ १०।११७।३

गृहेरुह पु॰ गृहे रोहति रुह—क अलुक् स॰। गृहजातद्रुमे स चाप्रशस्तः यथाह भा॰ आनु॰ १२७अ॰ "भिन्नभाण्डञ्च खट्वाञ्च कुक्कुटं शुनकं तथा। अप्रशस्तानि सर्वाणि यश्च वृक्षो गृहेरुहः"

गृहेनर्दिन् पु॰ गृहे एव नर्दति न युद्धे नर्द—इनि यावे-वनितादिव॰। कापुरुषे रणभीरौ गृहे आस्फालयितरि।

गृहेश पु॰ ६त॰। १गृहस्वामिनि गृहेश्वरादयोऽप्यत्र "अर्थस्त्रिकस्थाने गृहेश्वराधिष्ठितेऽङ्के वा" वृहत्सं॰ ५२अ॰। २राशीश्वरे च।

गृहोलिका स्त्री गृहे वलते वल—चलने क्वुन् बा॰ सम्प्र॰। जेठ्यां गृहगोधिकायाम् हेमच॰।

गृह्य पु॰ ग्रह—पदास्वैरीत्यादिना क्यप्। गृहासक्ते १खगे २मृगे च पञ्जरादिबन्धनेन परतन्त्रीकृतत्वात् तेषां तथात्वम्। ३गुह्ये मलद्वारे, न॰४अस्वैरिणि ५आयत्ते, ६स्वपक्षीये पक्षे च त्रि॰मेदि॰। "गृह्यागृह्याववचने विपश्चितः" किरा॰ "अगृह्यां यौतकामत्वाद्दैवगृह्यामनिन्दिताम्" भट्टिः। गृहे भवः यत् ७गृहभवे, वस्तुनि त्रि॰। ८गृहनिमित्तेऽग्नौ ९तत्साध्यकर्मणि च "उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः" आश्व॰ गृ॰१।१।२ "गृहनिमित्तोऽग्निः गृह्यः। तत्र भवानि कर्माण्यपि अतः यथा गृह्याणीत्युच्यन्ते। गृहशब्दो भार्यायां शालायाञ्च वर्त्तते। यथा 'सगृहो गृहमागतः' इत्यत्र हि पूर्वो गृहशब्दो भार्यावचनः उत्तरस्तु शालावचनः येषाञ्च भार्यासंयोगादुत्पन्नाग्नौ इमानि कर्माणि प्रवर्त्तन्ते तेषामयं गृह्यशब्दो भार्यावचनः। येषान्तु दायविभागकालेऽग्निरुत्पद्यते तेषां शालावचनः। "भार्यादिरग्निर्दायादिर्वा तस्मिन् गृह्याणि" इति गौतमसूत्रः" नारा॰ "तेऽस्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च।" वैश्वदेवस्य विहस्य गृहेऽग्नौ विधिपूर्वकम्। अग्निहोत्रं समादाय गृह्यस्याग्निपरिच्छदम्" इति च मनुः। तदवस्थस्य साध्यतया अत्। १०वेदोदितकर्मप्रयोगज्ञापके गोभिलसूत्रादौ ग्रन्थभेदे च। गृह्याग्निमधिकृत्य च शाखिभेदेन गृह्यकारास्त गोभिलाश्वलायनकात्यायनादयोऽतिविख्याताः। ११नगरबाह्यस्थे ग्रामे स्त्री टाप् मेदिनिः स्वार्थे क। गृह्यक तत्रैवार्थे। संज्ञायां कन्। गृहसिक्ते पक्षिमृगादौ अमरः।

गृ विज्ञापने चुरा॰ आत्म॰सक॰ सेट्। गारयते अजीगरत्।

गॄ शब्दे क्र्यादि॰पर॰प्वादि॰ सक॰ सेट्। गृणाति अगारीत जगार जगरतुः। गीर्यते गीर्णः। गीः।

अनु+शंसनविषयकर्णानुकूलव्यापारकृत्प्रोत्साहने तद्योगे पूर्वव्यापारस्य कर्त्ता संप्रदानसंज्ञो भवति यथा अध्वर्युः होत्रे अनुगृणाति होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः सि॰कौ॰

प्रति+अनुगृणातिवत् अर्थादि अस्याप्यपूर्वप्रयोगो नास्ति इति "अवादृचः" पा॰ सूत्रे भाष्यकार आह स्म

गॄ निगरणे तु॰ पर॰ सक॰ सेट्। अस्य वा रस्य लत्वम् गिरति गिलति अगारीत् अगालीत् जगार (ल)। जगरतुः। गीर्यते गीर्णः गीर्णिः गिरः गिरिः

अव+नीचैःकथने आत्म॰ अवगिरते नीचैः कथयतीत्यर्थः।

उद्+वमने। "रोमन्थः उद्गीर्य चर्वणम्" सि॰कौ॰ "अनुद्गीर्णसुरायुधम्" कुमा॰।

सम्+प्रतिज्ञायाम् आत्म॰। संगिरते प्रतिजानीते इत्यर्थः। "वस्तूनि देयानि निवर्त्तयिष्यन् रामं नृपः संगिरमाणएव" भट्टिः।

गेदृ गतौ भ्वा॰ आत्म॰सक॰ सेट्। गेदते अगेदिष्ट ऋदित्। अजिगेदत। जिगेदे। उदित्। गेदित्वा गेत्त्वा

गेन्दु(ण्डु)क पु॰ गच्छतीति गम—ड गः इन्दुरिव इवार्थे कन्। कन्दुके वस्त्रनिर्मिते गोलाकारे क्रीडनके। पृषो॰ वा इत्वे गेण्डुकश्च तत्रार्थे। पृषो॰ गेन्दू (ण्डू) कोऽपि दीर्घमध्यः। तत्रार्थे जटाधरः

गेय त्रि॰गै—कर्त्तरि नि॰ यत्। १गायके "गेयो माणवकः साम्नाम्" सि॰कौ॰ कर्मणि यत्। २गातव्ये त्रि॰ "अरण्ये गेयं साम" भावे यत्। ३गीते न॰ "गेये केन विनीतौ वाम्" रघुः। "वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव। अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता" माघः

गेव सेवने भ्वा॰आ॰सक॰सेट् । गेवते अगेविष्ट । ऋदित् अजिगेवत । जिगेवे । [जिगेवे ऋदित् अजिगेवत् । गेष्णः ।

गेष अन्वेषणे भ्वा॰ आत्म॰ सक॰ सेट् । गेषते अगेषिष्ट ।

गेष्णु पु॰ गेष—बा॰ न । १पर्वणि यन्थौ (गाँट) २अवयवभेदे "तस्यर्क् च साम च गेष्णौ"छा॰उ॰"तस्य ऋक् च साम च गेष्णौ पृथिव्याद्युक्तलक्षणो पर्वणी" भा॰"तस्य यद्रूपममुष्य तद्रूपं यौ गेष्णौ तावस्य गेष्णौ"छा॰उ॰

गेष्णु त्रि॰ गै—इष्णुच् । गायने सि॰कौ॰

गेह न॰ गो गणेशो गन्धर्वो वा ईहः ईप्सितो यत्र । गृहे । "जामयोयानि गेहानि" "एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन" मनुः । "त्यक्ता गेहं झटिति यमुना मञ्जुकुञ्जं जगाम" पदाङ्कदू॰"गेहदाहेऽग्नये" क्षामवते पुरोडाशः"कात्या॰श्रौ॰२५।४।२६। "यजमानस्य निवासगृहदाहेऽग्निगृहदाहे वा क्षामवत्त्वामाग्निस्तद्दैवत्य पुरोडाशः निर्वाप्य इत्यर्थः" कर्कः ।

स्वामिभेदादिना गेहानां नामभेदा हेमचन्द्रेण दर्शिता यथा

"प्रासादो देवभूपानां हर्म्यन्तु धनिनां स्वहम् । मठाश्छात्त्रावसथाः स्युश्चान्तप्रतिवेश्मनि । पर्णशालोटजश्चैव विहारो जिनसद्मनि । गर्भागारे प्रवरको वासौकः शयनास्पदम् । भाण्डागारं तु कोषः स्याच्चन्द्रशाला शिरोगृहम् । कुप्यशाला तु सन्धानी कायमानो तृणौकसि । होत्रीयन्तु हविर्गेहं प्राग्वंशः प्राग् हविर्गृहात् । आथर्वणं शान्तिगृहमास्थानगृहमिन्द्रकम् । तैलशाला यन्त्रगृहमरिष्टं सूतिकागृहम् । सूदशाला रसवती पाकस्थानं महानसम् । हस्तिशाला तु चतुरं वाजिशाला तु मन्दुरा । सन्दानिनी तु गोशाला चित्रशाला तु जालिनी । कुम्भशाला पाकपुटी तन्तुशाला तु गर्त्तिका । नापितशाला वपनी शिल्पा खरकुटी च सा । आवेशनं शिल्पिशाला सत्रशाला प्रतिश्रयः । आश्रमस्तु मुनिस्थानमुपघ्नस्त्वन्तिकाश्रयः । प्रपा पानीयशाला स्याद्गञ्जा तु मदिरागृहम् । पक्कणः शवरावासो घोषस्त्वाभीरपल्लिका । पण्यशाला निषद्याट्टो हट्टा विपणिरापणः । वेश्याश्रयः पुरं वेशो मण्डपस्तु जनाश्रयः" ।

ततोऽस्त्यर्थे इनि । गेहिन् मतुप् मस्य वः । गेहवत् गृहस्वामिनि स्त्रियां ङीप् । गेहं गेहकार्यं साध्यतयाऽस्त्यस्याः इनि ङीप् । भार्य्यायाम् "गेहिन्याः प्रिय इति सखे! चेतसा कातरेण"मेघ॰।

गेहेक्ष्वेडिन् त्रि॰ गेहे एव क्ष्वेडते क्ष्वेड—इनि पात्रे॰ स॰। स्वकाशक्ते युद्धादावनासक्ते कापुरुषे । युक्तारोह्यादित्वात् अस्य आद्युदात्तता ।

गेहेदाहिन् त्रि॰ गेहे दहति दह—इनि पात्रे॰स॰। कापुरुषे एवं गेहेविजितिन् गेहेव्याड गेहेमेहिन् गेहेदृप्त गेहेधृष्ट इत्येतेऽपि पात्रे॰स॰। कापुरुषे आद्युदात्तता च

गेहेशूर पु॰ गेह एव शूरः पात्रेसमितादि स॰। कापुरुषे युक्तारोह्या॰ आद्युदात्तता [अमरः ।

गेहोपवन न॰ गेहसमीपस्थमुपवनम् । गृहसन्निकृष्टोपवने

गेह्य त्रि॰गेहे भवः गेहाय हितं वा यत् । १गेहभवे २गेहहिते च । "यस्मै धायुरदधा मर्त्यायाभक्तं चिद्भजते गेह्यम्" ऋ॰ ४।२०।७

गै गाने भ्वा॰पर॰सक॰अनिट् । गायति । अगासीत् । जगौ जगतुः । गीयते गेयं गानं गीता गीतः गीतिः । गायकः गायनः गाथा गातुम् । गापयति जिगीषति । "सोऽपि तावत् प्रभवामि गातुम्" नैष॰"गेये केन विनीतं वाम्"? रघुः । "तत्र च गाथा गायन्ति वाक्या परमवस्तुना" भा॰व॰ १७८१ "गीतज्ञो यदि गीतेन नाप्नोति परमं पदम्" याज्ञ॰"जयोदारं बाहुगीपयामास किन्नरान्" रघुः ।

अनु+पश्चाद्गाने । अनुगायति "काचिद्दृश्मुतपद्मरागम्"

अभि+आभिमुख्येन समन्ताच्च गाने "राजधानीषु राज्ञां च समाजेष्वभ्यगायताम्" रामा॰ बा॰

अव+निन्दने अवगीतम् ।

उत्+उच्चैर्गाने । "उद्गास्यतामिच्छति किन्नराणाम्" कुमा॰। "उद्गीयमानं वनदेवताभिः" रघुः ।

उप+समीपगाने । "शिष्यप्रशिष्यैरुपगीयमानमवेहि तन्मण्डनमिश्रधाम" शङ्करदिग्विजयः । आधिक्येन गाने च "निकृत्तशैरुपगीयमानात्" भाग॰[गन्धर्वैरपि" मनुः ।

नि+निश्चयेन गाने । "तथा च श्रुतयो बह्व्यो निगीता वा

परि+समन्ततो गाने । "तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः" भाग॰१।१।१७ "ऋषिभिः परिगीतानि छन्दोभिश्च पृथक् पृथक्" गीता

प्र+प्रकर्षेण गाने । "यावत् कीर्त्तिर्मनुष्यस्य पृथक् लोके प्रगीयते" भा॰उद्यो॰ ११८४

वि+निन्दने । "मृगया न विगीयते नृपैः"विगीयसे(केतक!) मन्मथदेहदाहिना" नैष॰ विविधगाने च । [गायकैः ।

सम्+सम्यग्गाने । "सङ्गीयमानत्रिपुरावदानः" गन्धर्वाप्सरसोभिः सुर-

**गैर** त्रि० गिरौ भवः अण् । १पर्वतभवे स्त्रियां ङीप् । सा च (विषलाङ्गुल्या) २लाङ्गलीद्रव्ये रत्नमा० (गेरिमाटि) ३उपधातुभेदे न० शब्दार्थचि०।

**गैरकंबूल** न० नीलकण्ठताजकोक्ते वर्षलग्नकालिक षड्योगभेदे तल्लक्षणादि तत्रोक्तं यथा "यस्याधिकारः खर्ष्यादि शुभोऽथवाऽप्यशुभोऽपि वा । केनापि इत्थमूर्त्तिश्च स न्मूल्याश्रम इष्यते । लग्नका-र्य्येशयोरित्थशाले न्मूल्याश्रमः शशी । उच्चादिपदशून्यत्वा न्नेत्थशालोऽस्ति केनचित् । यद्यन्यर्क्षं प्रविश्यैषः स्वभो-च्चस्येत्थशालवान् । गैरकंबूलमेतत्तु पदोनेनाशुभं स्मृतम् । उदा० । सिध्येत् सुखमिति प्रश्ने सिंहलग्नं रविः क्रिये । षष्ठांशैः, शुक्रपः कुम्भे भौमोऽंशैः रवि-भिस्तयोः । इत्थशालोऽस्ति तस्येन्दुः कन्यायां चरमेऽं-शके । खर्ष्यादिपदहीनस्य नेत्थशालोऽस्ति केनचित् । स्वर्क्षेगेन शशिनाऽन्यर्क्षस्थेनेत्थशालकृत् । गैरकंबूल मन्येन सहायाल्लाभदायकम्" । इत्यो० गैरकंबूलमप्यत्र

**गैरायण** पुंस्त्री गिरेर्गोत्रापत्यम् अश्वा० फञ् । गिरिगो-त्रापत्ये ।

**गैरिक** न० गिरौ भवम् ठञ् । (गेरिमाटि) उपधातुभेदे तद्गुणादि भावप्र० उक्तं यथा । "गैरिकं रक्तधातुश्च गैरेयं गिरिजं तथा । सुवर्णगैरिकं त्वन्यत् ततो रक्ततरं हि तत् । गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम् । चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम्" [राजनि०।

**गैरिकाक्ष** पु० गैरिकमिवाक्षि पुष्पमस्य । जलमधुके वृक्षे ।

**गैरेय** न० गिरौ भवम् ढक् । शिलाजतुनि अमरः । (गेरि-माटी) ख्याते उपधातुभेदे भावप्र०।

**गो** पुंस्त्री गच्छत्यनेन गम–करणे डो । १स्वनामख्याते पशुभेदे वृषस्य यानसाधनत्वात् स्त्रीगव्याश्च दानद्वारा स्वर्गगति-साधनत्वाच्च तथात्वम् । गतिसाधनतया तस्य तथार्थत्व-योगेन यौगिकत्वेऽपि योगरूढत्वम् । एतेन दर्पणकृता "व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे गौः शेते इत्यत्रापि लक्षणा स्यात् "गमेर्डोः" इति व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि प्रयोगात्" इति यदुक्तं तत् पामरादिकमेव गमेर्डोः इत्युणादिप्रत्ययस्य कर्त्तृवाचकत्वानियमात् "ताभ्यामन्यत्रोणादयः पा०सूत्रे उणादीनां अपादा-नसंप्रदानभिन्नार्थत्वनियमात् अत्र करणार्थकडोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि गतिसाधनत्व-रूपयोग्यतावाचकत्वात् फलोपधायकत्वनियमे याना-

सनशयनादीनामपि गतिशयनादिविगमकाले तच्छब्द-वाच्यतानुपपत्तेः । गम्यते ज्ञायते अनेन करणे, शीघ्रं गच्छति कर्त्तरि वा डो । २रश्मौ किरणे तस्य शीघ्र गामित्वात् चाक्षुषज्ञानहेतुत्वाच्च तथात्वम् सूर्यादिकिरण संपर्कं विना चाक्षुषज्ञानासम्भवात् रश्मेर्ज्ञानसाधनत्वात् तथात्वम् । ३वज्रे ४हीरके तस्यापि कठिनद्रव्येऽपि गतिमत्त्वात् तथात्वम् । कर्मणि डो । ५स्वर्गे कर्मिभि र्गम्यमानत्वात् तस्य तथात्वम् मेदि०। ६चन्द्रे विश्वः कर्मिभिस्तल्लोकगमनात्तस्य तथात्वम् ७सूर्ये ८गोमेधयज्ञे भानुदीक्षितः । सूर्यस्य शीघ्रगतिकत्वात् अर्चिरादि-म्भर्गिष्ठानतया आतिवाहिकत्वात् तथात्वम् । "संवत्स-रादादित्यमादित्याच्चन्द्रमसम्" छा०उ०। आतिवाहिकशब्दे ६५१पृ०दृश्यम् ९ऋषभनामौषधे राजनि०। तस्य गोना-मकत्वात् तथात्वम् । करणे डो । १०नेत्रे स्त्री तस्य चाक्षुषज्ञानसाधनत्वात् तथात्वम् । कर्त्तरि डो । ११वाणे स्त्री तस्य शीघ्रगतिकत्वात् तथात्वम् । कर्मणि डो । १२दिशि स्त्री दिशां पलायनकाले गम्यमान-त्वात्तथात्वम् । १३वाचि स्त्री तस्याः ज्ञानहेतुत्वात् तथात्वम् । आधारे डो । १४भुवि स्त्री तस्याः गमना-धारत्वात् तथात्वम् १५जले च स्त्रीन०व० केचित् तस्य निम्नगतित्वात् १६पशुमात्रे अमरः १७मातरि १८लो-मनि भानुदीक्षितः । १९हयरागौ २०नवसंख्यायाम् गोभूमेर्नवखण्डात्मकत्वात् आकाशे सदागतिमद्ग्रहाणां नवत्वाद्वा तत्संख्यासाम्यात् तथात्वम् । २१पुलस्त्यभा-र्यायां गविजातशब्दे २५६६ पृ०दृश्यम् । ज्ञानहेतुत्वात् २२इन्द्रिये गोचरः । पदान्तस्थितस्योपसर्जनस्य समा०ह्रस्वः शीतगुः सहस्रगुः । अस्य उत्तरपदस्थत्वे तत्पुरुषे अच् समा०। पुंसि परमगवः स्त्रियां सित्वात् ङीष् दुग्धगवी गोः पुरीषं मयट् । गोमय (गोवर) ख्याते पदार्थे न० गावो विद्यन्तेऽस्य विनि गोमिन् । मतुप् । गोमत् गोविशिष्टे गोस्वामिनि च त्रि० स्त्रियां ङीप् । गोःस्थाने गोष्ठच् गोगोष्ठ गोस्थाने न० गोमांसगुणा भावप्र०उक्ता यथा "गोमांसं तु गुरु स्निग्धं पित्तश्लेष्मविवर्द्धनम् । बृंहणं वातहृत् बल्यमपथ्यं पीनसप्रणुत् । गोरिदं यत् "वान्तो यि प्रत्यये" पा० अवादेशः । गव्य गोदुग्धादौ भावप्र० तद्वाद्युक्तं यथा

"गव्यं दुग्धं विशेषेण मधुरं रसपाकयोः । शीतलं स्तन्यकृत् स्निग्धं वातपित्तास्रनाशनम् । दोषधातुमल-

दिक्रमेण महाविजनेषु आर्षे प्रयोगे क्वचित् एकार्थेऽपि वुक्। “कोषं विक्रष्टुमपनेष्यति गोकुलं च” भा० २।८।१२ “गोकुलं गोकुलवासिजनम्” श्रीधरः

**गोकुलिक** त्रि० गोर्नेत्रस्य कुलः संस्थानमत्र। १केकरे। गवि पङ्कस्थगव्यां कुलिकः जडइव। २पङ्कस्थमव्युपेक्षके च मेदि०।

**गोकृत** न० ३त०। १गोमये २गवा चरिते त्रि०।

**गोक्षोडक** पुंस्त्री गवि क्षोड इव कायति कै—क। सुश्रुतोक्ते प्रतुदखगभेदे कपोतादिगणे “कुलिङ्गगोक्षोडकोत्याद्यहा “प्रतुदाः” इत्युक्तं सुश्रुतेन।

**गोखा** स्त्री गां भूमिं खनत्यनया खन—ड। नखे पाठान्तरे क्रोडादिषु पाठात् स्वाङ्गत्वेऽप्युपसर्जने न ङीष्

**गोक्षु(खु)र** पु० गोः पृथिव्याः क्षु(खु)र इव। स्वनामख्याते क्षुपभेदे। तत्पर्यायगुणाद्युक्तं भावप्र०

“गोक्षुरः क्षुरकोऽपि स्यात् त्रिकण्टः स्वादुकण्टकः। गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि। न्युक्तं कथाश्व दंष्ट्रा च तथा स्वादिमगन्धिका। गोक्षुरः शीतलः स्वादुर्बलकृद् वस्तिशोधनः। मधुरो दीपनो वृष्यः पुष्टिदश्चाश्मरीहरः। प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत्”।

स च लघुपञ्चमूलान्तर्गतोदशमूलान्तर्गतश्च यथाह तत्रैव “शालपर्णी पृश्निपर्णी वार्त्ताकी कण्टकारिका। गोक्षुरः पञ्चभिश्चैतैः कनिष्ठं पञ्चमूलकम्। पञ्चमूलं लघु स्वादु बल्यम्पित्तानिलापहम्। नात्युष्णं बृंहणं ग्राहि ज्वरश्वासाश्मरीप्रणुत्” “उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम्। दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः। तन्द्राशोथज्वरानाहपार्श्वपीडाऽरुचीर्हरेत्।”

गोक्षुरिः इकारान्तोऽपि तत्रार्थे शब्दर०पृषो०साधु।

**गोगोयुग** न० गवोर्द्वित्वम् गो+द्वित्वे गोयुगच्। गवोर्द्वित्वे।

**गोगोष्ठ** न० गोः स्थानम् गो+स्थाने गोष्ठच्। गवां स्थाने।

**गोगृष्टि** स्त्री गौर्गृष्टिः जात्या समासे परनिपातः। सकृत्प्रसूतायां गवि सि०कौ०।

**गोग्रन्थि** पु० गोजातो ग्रन्थिः। १करीषे। गोर्ग्रन्थिर्यत्र। २गोष्ठस्थाने। ३गोर्ग्रन्थिरिव। गोजिह्वौषधौ मेदि०।

**गोघ्न** त्रि० गां हन्ति हन—क ६त०। गोहन्तरि। तद्व्रतं मनुना दर्शितं यथा

“उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत्। कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृतः। चतुर्थकालमश्नीयाद-क्षारलवणं मितम्। गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः। दिवानुगच्छेत्ता गास्तु तिष्ठन्नूर्द्ध्वं रजः पिबेत्। शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत्। तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत्। आसीनासु तथासीनो नियतो वीतमत्सरः। आतुरामभिशस्तां च चौरव्याघ्रादिभिर्भयैः। पतितां पङ्कलग्नां वा सर्वोपायैर्विमोचयेत्। उष्णे वर्षति शीते वा मारुते वाति वा भृशम्। न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः। आत्मनो यदि वान्येषां गृहे क्षेत्रे खलेऽथवा। भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम्। अनेन विधिना यस्तु गोघ्नो गामनुगच्छति। स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति। वृषभैकादशा गाश्च दद्यात् सुचरितव्रतः। अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत्। “गोघ्नवत् विहितः कल्पश्चान्द्रायणमथापि वा” प्रा०त० स्मृतिः। गौर्हन्यतेऽस्मै सम्प्रदाने क। २अतिथिभेदे तस्यागमने हि मधुपर्कार्थं गोहननं विहितम् “महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेत्” इति स्मृतेः कलौ तु तन्निषेधः “मधुपर्के पशोर्बधः” इत्यादिव्यपुराणे कलिवर्ज्येषु तस्योक्तेः।

**गोघृत** न० गोः पृथिव्या घृतमिव यस्य पोषकत्वात्। १वृष्टिजले त्रिका०। ६त०। २गव्ये घृते च

**गोचन्दन** न० गोशीर्षाख्यं चन्दनम् शा०त०। गोशीर्षाख्ये चन्दने “गोचन्दनाभ्रोहिनिकामधुकमाक्षिकं मधु। सुवर्णमिति संयोगः पेयः सौभाग्यमिच्छता” इत्युक्तः

**गोचर** पु० गावः इन्द्रियाणि चरन्त्यस्मिन् चर-घ। १इन्द्रियवेद्ये रूपरसादौ विषये। एकैकेन्द्रियविषयाश्च शब्दादयस्तत्र श्रोत्रस्य शब्दो विषयः, एवं त्वचः स्पर्शः, नेत्रस्य रूपम्, जिह्वाया रसः, घ्राणस्य गन्धः। २ज्ञानमात्रविषयेऽपि “स्त्रस्तसंशयगोचरोदरी” नैष० “अवाङ्मनसगोचरम्” वेदा०सा० गोचरत्वं ज्ञाननिरूपिता विषयता सा च स्वरूपसम्बन्धविशेषः। कर्त्तरि अच्। ३भूमिचरे त्रि०। गाश्चरन्त्यस्मिन् घच्। ४गवां प्रचारवनादौ, “उपारताः पश्चिमरात्रिगोचरान्” किरा० ५गन्तव्यदेशे “इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्” कठोप० ६देशमात्रे, “ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे” देवीमा०। ७गवां व्योमगतिमतां ग्रहाणां चरः भावे अच्। गतिभेदे च “गोचरे वा विलग्ने वा ये ग्रहारिष्टसूचकाः” ज्यो० सन्निमित्तदा-

ऽस्त्यस्य अच्। ज्योतिषोक्ते जन्मराश्यवधिकेषु तत्तत् स्थानेषु दृष्ट्यादिग्रहगमननिमित्तशुभाशुभनिरूपणे। ज्योतिषोक्ते गोचरशुद्धत्रशुद्धौ वामवेध दक्षिणवेधादिकं च मु॰चि॰ पी॰धा॰ उक्तम् यथा

"सूर्यो रसान्त्ये खयुगेऽब्धिनन्दे शिवाग्नयोर्भौमशनी तमश्च। रसाङ्ग्योर्भाद्यमरे गुणान्त्ये, चन्द्रोऽम्बराद्यौ गुणनन्दयोश्च (१)। लाभाष्टमे चाद्यशरे रसान्त्ये नगद्वये, ज्ञोद्विशरेऽब्धिरामे। रसाङ्ग्योर्नागविधौ खनागे लाभव्यये, देवगुरुः शराब्धौ (२)। द्व्यन्त्ये नवामे द्विगुणे शिवाग्नौ, शुक्रः कुनागे द्विनगेऽब्धिरूपे। वेदाम्बरे पञ्चनिधौ गजेषौ नन्देगयोर्भानुरसे शिवाग्नौ (३)। क्रमाच्छुभो विद्ध इति ग्रहैः स्यात्पितुः सुतस्यात्र न वेधमाहुः। दुष्टोऽपि खेटो विपरीतवेधाच्छुभो द्विकोणे शुभदः सितेऽब्जः (४)। स्वजन्मराशेरिह वेधमाहुरन्ये ग्रहाधिष्ठितराशितः सः। हिमाद्रिविन्ध्यान्तर एव वेधो न सर्वदेशेष्विति काश्यपोक्तिः (५)। जन्मर्क्षे निधनं ग्रहे जनिभतो घातः, क्षितिः श्रीर्व्यथा चिन्ता सौख्यकलत्रदौस्थ्यमृतयः स्युर्माननाशः सुखम्। लाभोऽपाय इति क्रमात्तदशुभध्वस्त्यै जपः स्वर्णगोदानं शान्तिरथो ग्रहं त्वशुभदं नो वीक्ष्यमाहुः परे (६)। पापान्तःपापयुक् द्यूने पापाच्चन्द्रः शुभोऽप्यसत्। शुभांशे चाधिमित्रांशे गुरुदृष्टोऽशुभोऽपि सत् (७)। सितासितादौ सदृष्टे चन्द्रे पक्षौ शुभाशुभौ। व्यत्यासे चाशुभौ प्रोक्तौ सङ्कटेऽत्रबलं त्विदम् (८)। वज्रं शुक्रेऽब्जे सुमुक्ता, प्रवालं भौमेऽगौ गोमेदमार्कौ सुनीलम्। केतौ वैदूर्यं, गुरौ पुष्पकं ज्ञे पाचिः, प्राङ्माणिक्यमर्के तु मध्ये (९)। माणिक्यमुक्ताफलविद्रुमाणि गारुत्मतं पुष्पकवज्रनीलम्। गोमेदवैदूर्यकमर्कतः स्युरत्नान्यथोज्ञस्य मुदे सुवर्णम् (१०)। धार्यं राजावर्त्तकं राहुकेत्वोरौप्यं शुक्रेन्द्वोश्च, मुक्ता गुरोस्तु। लोहं मन्दस्यारभान्वोः प्रवालं ताराजन्मर्क्षाश्रिराशिस्थितः स्यात्" (११)। मु॰ चि॰।

"अथ गोचराकरणं व्याख्यायते तत्र जन्मराशितः प्रोक्तनिषिद्धस्थानस्थितेदानीन्तनग्रहवशेन शुभाशुभनिरूपणं गोचर इत्युच्यते तत्र ग्रहाणां गोचरफलं शुभाशुभरूपमुपजातिकाद्वयेनेन्द्रवज्रया चोपजातिका पूर्वार्द्धेन चाह सूर्यो रसान्त्ये इत्यादौ सर्वोऽहन्योऽभिधानैकवद्भवतीति समाहारद्वन्द्व एकवचनान्तः। शिवाग्नयोरित्यादावितरेतरयोगद्वन्द्वः अम्बराद्याविन्यादिषु तु नगाद्यागमशासनमिति सुगमभावोऽध्येयः एवं सर्वत्र व्याख्येयम्। अत्र चतुर्थश्लोकेनान्वयः स्वजन्मराशेरिति पञ्चमश्लोकस्य पदमत्राध्याहार्यम्। तत्र सूर्योग्रहः स्वजन्मराशेः रसान्त्ये क्रमाच्छुभो विद्धश्च स्यात्। सूर्यः स्वजन्मराशेः षष्ठगो यदि षष्ठस्थाने तदा शुभम् अतः जन्मराशेर्द्वादशस्थानस्थिताश्चेदन्ये ग्रहाः स्युस्तदा विद्धः शुभोऽप्यशुभफलदाता अत्र शनैश्चरस्य सूर्यपुत्रत्वात् सहैवेनार्कोकार्यः यतः पितुर्जनकस्य सुतसम्बन्धिनं वेधं नाहुः सुतस्यापि पितृसम्बन्धिवेधं नाहुः। तथा खयुगे जन्मराशेर्दशमे सूर्यः शुभश्चतुर्थस्थानस्थिताश्चेदन्ये ग्रहाः शनिवर्जिताश्च स्युःतदा विद्ध इत्येवं श्लोकत्रयं सम्यग्व्याख्येयम्। तथा अब्धिनन्दे तृतीयनवमयोः, शिवाग्न्योरेकादशपञ्चमयोः सूर्यः क्रमाच्छुभो विद्धश्च ज्ञेयः उक्तञ्च नारदेन "शुभोऽर्को जन्मतस्त्र्यायदशषट्सु विध्यते। जन्मतो नवपञ्चाब्धिव्ययगैर्व्यार्किभिस्तदा"। अथ भौमेति। भौमशनी तमो राहुश्चैते ग्रहाः स्वजन्मराशितः रसाङ्ग्योः षष्ठनवस्थानयोः क्रमाच्छुभा विद्धाश्चेत्यर्थः परन्तु शनेः सूर्यवेधो नास्तीत्युक्तमेवेति। यदाह वसिष्ठः "त्रिषडेकादशगाः क्षितिजो धरासुतो रिष्फनवमसुतसंस्थैः। दिनकरतनयोऽपि शुभो न विद्यते खेचरैर्विनोष्णकरमिति"। "शनिवद्राहुकेत्वोः" इति वचनाद्राहोरप्येवमेवैव विचारः। राहोरुपलक्षणत्वात्केतोरपि उक्तञ्च शार्ङ्गधरेण "राहुकेतुफलं सर्वं मन्दवत्कथितं बुधैः। वेधोऽपि तद्वदेवो ज्ञोयमवेधस्तथैव च।" अथ चन्द्र इति जन्मराशितः अम्बराद्यौ दशमचतुर्थयोः, गुणनन्दयोस्तृतीयनवमयोः (१) लाभाष्टमे एकादशाष्टमयोः, आद्यशरे प्रथमपञ्चमयोः, रसान्त्ये षष्ठद्वादशस्थानयोः नगद्वये सप्तमद्वितीययोः स्थानयोश्चन्द्रः क्रमात् शुभः विद्धश्च ज्ञेयः चन्द्रस्य बुधवेधो नास्ति। उक्तञ्च नारदेन "विध्यते जन्मतोमेन्दुर्द्युनाद्यायारिखत्रिषु। खेऽष्टान्त्याब्धिधर्मस्थैर्विबुधैर्जन्मतः शुभः" इति। अथ ज्ञ इति जन्मराशेः द्विशरे द्वितीयपञ्चमयोः अब्धिरामे चतुर्थतृतीययोः, रसाङ्ग्योः षष्ठनवमयोः, नागविधौ अष्टमप्रथमयोः, खनागे दशमाष्टमयोः, लाभव्यये एकादशद्वादशयोः स्थानयोर्ज्ञो बुधः क्रमाच्छुभो विद्धश्च ज्ञेयः। परं त्वत्र चन्द्रवेधो नास्ति यदाह नारदः "ज्ञः स्वाब्धिद्व्यष्टखायेषु जन्मतश्चेन्न विध्यते। सुतत्र्यङ्काद्याष्टमान्त्यसंस्थितैरिन्दुजः शुभः" इति अथ देवगुरु-

रिति जन्मराशितः शशाङ्को पञ्चमचतुर्थयोः, (२) द्वयन्त्ये द्वितीयद्वादशस्थानयोः, नवान्ते नवमदशमयोः स्थानयोः हिबुके द्वितीयतृतीययोः शिवाग्नौ एकादशतृतीययोः । देवगुरुर्वृहस्पतिः क्रमाच्छुभो विद्धश्च ज्ञेयः उक्तञ्च नारदेन "जन्मतः स्वादगोऽश्वत्रिशिवन्त्याटस्वजर्क्षगैः जन्मराशेर्गुरुः श्रेष्ठो यद्यैर्वेद न विध्यते" इति । अथ शुक्र इति जन्मराशेः कुनागे प्रथमाष्टमयोः, द्विनगे द्विसप्तमयोः, अग्निरूपे तृतीयप्रथमयोः, वेदाम्बरे चतुर्थदशमयोः, पञ्चनिधौ पञ्चमनवमयोः, गजेषौ अष्टमपञ्चमयोः, नन्देशयोर्नवमद्वादशयोः, भानुरस्रे द्वादशषष्ठयोः, शिवाग्नौ एकादशतृतीययोः स्थानयोः, (२) शुक्रः क्रमाच्छुभो विद्धश्च ज्ञेयः यदाह नारदः "जन्मभादाद्यताष्टाङ्कान्त्यायेष्विष्टो न विध्यते । भार्गवो मृत्युप्राद्यस्वाङ्कस्थायारिपुत्रगैरिति" आद्यतेत्यभिविधावाङ्ग्रहृतेनाऽन्त्यग्राभिविधिरिति तेन प्रथमद्वितीयतृतीयचतुर्थपञ्चमानां ग्रहाणामित्यर्थः । इदमत्राकूतं यो यो ग्रहः रवस्त्र्यादौ इत्यादौ प्राक्पठितेषु स्थानेषु विद्यमानः स स ग्रहः शुभदः शुभस्थानव्यतिरिक्ताशिवस्थानेषु विद्यमानः स स ग्रहोऽशुभफलदाता अतएवाह श्रीपतिः "सर्वे लाभगृहस्थितास्त्वरिपुगाः कुजार्की त्रिषट् । प्राप्तौ साद्यसमन्मथारिषु शशी खाताारिवर्जं भृगुः । धीधर्मास्तधनेषु वाक्पतिरिति खाष्टाम्बुखस्थो बुधः श्रेष्ठो जन्मगृहादि गोचरविधौ विद्धो न चेत् स्याद्ग्रहैरिति"। अर्थादेवानुक्तस्थानेष्वशुभः स स ग्रहः । अत्र ग्रहाणां विहितनिषिद्ध स्थानफलानि निधरन्ते । तत्र

रवेः । "स्थानं जन्मनि नाशयेद्दिनकरः कुर्य्यात्, द्वितीये भयं, दुश्चिक्ये३ श्रियमातनोति हिबुके४ मानक्षयं यच्छति । दैन्यं पञ्चमगः करोति रिपुहा षष्ठेऽर्थहा सप्तमे पीडामष्टमगः करोति परुषां कान्तिक्षयं धर्मे९गः । कर्मसिद्धिजनकस्तु कर्म१०गो वित्तलाभकृदयाय११संस्थितः । द्रव्यनाशजनितां महापदं यच्छति व्यय१२गतो दिवाकरः"

चन्द्रस्य—"जन्मन्यन्नन्दयति हिमगुर्वित्तनाशं द्वितीये दद्यात् द्रव्यं सहज३भवने कुक्षिरोगं चतुर्थे । कार्ये नाशं तनय५गृहगो वित्तलाभं च षष्ठे द्यूने७ द्रव्यं सुरतिसहितं मृत्यु८संस्थोऽपमृत्युम् । नृपभयं कुरुते नवमः शशी दशमधामगतस्तु महत् सुखम् । विविधमाय११गतः कुरुते धनं व्यय१२गतस्तु रुजं धनसंक्षयम्"

कुजस्य—"प्रथमस्थगतः क्षोणीसुतः करोत्यरिजं भयं क्षपयति धनं वित्त२स्थाने तृतीयगतोऽर्थदः । अरिभयमतः पाताले४ऽथोन् क्षिणोति हि पञ्चमो रिपु६गृहगतः कुर्य्यात् स्वं रुजं मदन७स्थितः । जनयति निधनस्थः शस्त्रबाधां धराजो दिशति नवमसंस्थः कायपीडामतीव । शुभमपि दशमस्थो लाभ११गो भूरिलाभं १२व्ययभवनगतोऽसौ व्याप्यनर्थादिनाशान्"

बुधस्य—"बुधः प्रथमगो भयं दिशति बन्धनं धने२ धनं रिपुभयान्वितं सहज३गश्चतुर्थेऽर्थदः । अनिष्टनिकरो भवेत्तनय५गोऽरिद६गः स्थानदः करोति मदन७स्थितो बहुविधां शरीरव्यथाम् । अष्टमे शशिसुते धनवृद्धिर्धर्म९गस्तु महतीं तनुपीडाम् । कर्म१०गः सुखमथाय११गतोऽर्थं द्वादशे भवति वित्तविनाशः ।

गुरोः—"भयं जन्मन्यार्यो जनयति धन२स्थोऽर्थमतुलं तृतीयेऽङ्गक्लेशं दिशति च चतुर्थेऽर्थविलयम् । सुखं पुत्र५स्थाने स्वजनमपि च कुर्यादरि६गृहे शुचं द्यूने७ पूजां धननिचयनाशं च निधने८ । धर्म९गतो धनवृद्धिकरः स्यात्प्रीतिकरो दशमेऽमरपूज्यः । स्थानधनानि ददाति स चाये११ द्वादशगस्तनुमानसपीडाम्"

भृगोः । "जन्मन्यतिक्षयकरो भृगुजोऽर्थदोऽर्थे २दुश्चिक्य३गः सुखकरो धनदश्चतुर्थे । स्यात्सुतदस्तनय५गोऽरिद६गतोऽरिवृद्धिं शोकप्रदो मदन७गो निधने८ऽर्थदायी । जनयति विविधाम्बराणि धर्मे९ न सुखकरो दशमस्थितस्तु शुक्रः । धननिचयकरः स लाभ११संस्थो व्यय१२भवनेऽपि धनागमं करोति"

शनेः । "वित्तध्वंसं रुगार्त्तिं दिनकरतनयो जन्मराशिं प्रपन्नो वित्तक्षयं द्वितीये धनहरणकृतं वित्तलाभं तृतीये । पाताले४ शत्रुवृद्धिं सुतभवन५गतः पुत्रभृत्यार्थनाशं षष्ठस्थानेऽर्थलाभं जनयति मदने७ दोषसंघातमार्किः । शरीरपीडां निधने८ च धर्मे९ धनक्षयं कर्मणि१० दौर्मनस्यम् । उपान्त्य११गो वित्तमनर्थमन्त्ये१२ शनिर्ददातीत्यवदद्वशिष्ठः"

राहोः केतोश्च—"राहुर्जन्मगतो भयं च कलहं सौभाग्यमानक्षयं वित्तध्वंसमसह्यदुःखं नृपभयं चार्थक्षयं यच्छति । सन्तापं कलहं च वित्तमधिकं शौर्यं विनाशं रुजां केतुस्तत्फलमेव राशिषु वदेच्छन्ति गर्गादयः" ।

एतच्छुभाशुभफलप्रदा ऊर्द्ध्वार्क्षगतास्तथा राशिवर्त्तिगता एकत्रराशेः फलं ददति वक्रिणस्तु प्राग्राशेरित्याह बादरायणः "मध्यवर्त्तिगताः

खेटाः राशिसन्धिगता ग्रहाः । एवम्राशेः फलं दद्यु-र्वक्रो तद्विपरीतमिति” राशिग्रहणं नक्षत्रस्याप्युप-लक्षणम् । वशिष्ठोऽपि “भवनान्तंगताधिष्ण्यान्त-गताश्च गगनचराः । दद्युः परभवनफलं प्राग्भवनफलं च वक्रिता यत्र” इति । अस्यार्थः ऋक्षं नक्षत्रं तस्य सन्धिः एकस्मान्निर्गत्यापरत्र संक्रमणं सन्धिरेवं राशि-सन्धिश्च । तत्र सन्धिमानम् । “देवज्ञ्यकृत्तिवोऽष्टौ ना-ड्योऽङ्काः खनृपाः क्रमात् । वक्र्याः संक्रमणेऽर्कादेः प्राग्रेऽर्क्याततिनिन्दिताः” इति विवाहप्रकरणे वक्ष्यति पञ्चलम् । संक्रमणकाल एव सन्धिकालः सर्वेषां ग्रहाणाम् “घटिष्टविश्वं ग्रहभुक्तिभक्त”मित्यादिना भास्करेणोक्तत्वात् । तदेतदस्माभिः संक्रान्तिप्रकरणे सप्रपञ्चं निरूपितं तत एवावधार्यम् । तत्र सूर्यादिग्रहाः देवद्व्यङ्कतिथ्यो-क्त घटिकोपलक्षिते नक्षत्रान्ते राश्यन्ते वा स्थिता जिगमिषितस्य नक्षत्रस्य राशेर्वा फलं प्रयच्छन्ति वक्रि-णस्तु पूर्वोक्तलक्षणोपलक्षिते नक्षत्रादौ राश्यादौ वा स्थिता भुक्तस्य नक्षत्रस्य राशेर्वा फलं ददति । तत्र भौ-माद्याः ग्रहाः वक्रातिचारयोः प्राग्राशिफलं कियन्ति दिनानि प्रयच्छन्तीत्याह वशिष्ठः “दद्युर्द्विकं पञ्चदिनं त्रिपक्षमतिचारवक्रयोर्दद्युः । भौमाद्याः पञ्चदिनं प्राग्राशिफलं च पञ्च मासांश्चेति” भौमाद्याः स्वगत्या यावता कालेन राशिं जहति ततोऽल्पेन न्यूनाधिक-भावेन स चारः यदा चारसमये राशिं जहति सोऽति-चारः, वक्रं प्रसिद्धमेव । अथ वामवेधं शुक्लपक्षे चन्द्रबलं चोपजात्युत्तरार्द्धेनाह । दुष्टोऽपि स्वजन्मराशेः सका-शादनिष्टस्थानस्थितोऽपि खेटो विपरीतवेधात् वाम-वेधाच्छुभः शुभफलदाता । अयमर्थः येषु षड्दशमतृती-यैकादशेषु स्थितः सूर्यः शुभफलदाता तद्भिन्नान्यष्टौ स्थानान्यशुभान्येव तत्र द्वादशचतुर्थनवमपञ्चमाख्येष्वनिष्ट-स्थानेषु स्थितः सूर्यस्तदैवानिष्टफलदः स्याद्यदा प्राक् पठितैः क्रमेण षष्ठादिस्थानस्थितैः शनिवर्जितैः ग्रहैर्न विद्धः यदा तु विद्धस्तदा शुभफलदोऽपि षष्ठादिस्थाने शुभदो नैव स्यात् । अन्येषु स्थानेषु प्रथमद्वितीयसप्ता-ष्टमेषु स्थितः सूर्योऽनिष्टफलद एव । एवं चन्द्रबुधयोः षडेव विद्धस्थानानीति क्रमवेधवामवेधौ स्याताम् । भौमस्य तु त्रीण्येव शुभानीतराण्यशुभान्येव तत्र नवपञ्चमद्वा-दशस्थानस्थितभौमस्याशुभस्य क्रमेण षष्ठैकादशतृतीय-स्थानस्थैर्ग्रहैर्वामवेधेन शुभत्वमेव । अन्येष्वशुभस्थान-स्थितेष्वशुभएव भौमः । एवं शनिराहुकेतवोऽप्येयाः गुरोरप्येवमेव । तत्र तु प्रथमषष्ठस्थानस्थो गुरुरशुभ एव । शुक्रस्य तु नवस्थानानां शुभत्वात्तद्व्यतिरिक्तानि त्रीणि षष्ठसप्तमदशमस्थानान्यशुभानि तेषामेव क्रमेण द्वा-दशद्वितीयचतुर्थस्थानस्थग्रहजनितवामवेधेन शुभत्वमेव । अन्येषां तूत्तरपठितत्वात् स्थानानां शुभत्वादेव न वाम-वेधविचारार्हत्वमिति परिच्छिन्नोऽर्थः यदाह कश्यपः “अपि विद्धो ग्रहः कश्चिद्ददाति शुभं फलम् । वामवे-धविधानेन त्वशुभोऽपि शुभप्रदः । अतस्तद्द्विविधं मूलं विचार्यैव फलं वदेत्” इति । वशिष्ठोऽपि “वेधसमन्वित खचराणां प्रदिशन्त्यसत्फलं किञ्चित् । व्यत्ययवेधवि-धानादपि शुभास्ते शुभप्रदाः सततमिति” व्यत्ययवेधो वामवेधः । त्रिकोण इति । सिते शुक्लपक्षेऽब्जश्चन्द्रो त्रि-कोणे द्वितीयनवमपञ्चमस्थानेषु स्थितः शुभदः अत्रापि क्रमेण षष्ठाष्टमचतुर्थस्थानस्थितैर्बुधवर्जितैर्ग्रहैर्नाविद्धः इत्यपि ध्येयं उक्तं च नारदेन “शुक्लपक्षे शुभश्चन्द्रो द्वितीयनवपञ्चगः । रिपुमृत्युम्बुसंस्थैर्न विद्धो हि गगनेचरैरिति” यदि विध्यते तदाऽशुभफलद एव (४) अथ द्विविधवेधे मतद्वयसुपजात्याह स्वजन्मेति । इह द्विविधवेधविधातारो नारदादयः । स्वजन्मराशेः सकाशाद्द्विविधं वेधं क्रामिकं वामिकं चाहुः । तथा चोभयत्रापि नारदेन जगात इत्युक्तम् । अथ कश्यपादि-मतमुच्यते । स पुनर्द्विविधोऽपि वेधोग्रहाधिष्ठितराशितो-ज्ञेयः यथा सूर्यो जन्मराशेः सकाशात् षष्ठस्थितः शुभः स सूर्यःस्वाक्रान्तराशितो द्वादशस्थानस्थितैः शनिवर्जितै-र्ग्रहैर्न विद्धः तथा सूर्यो जन्मराशिद्वादशस्थोऽपि नेष्टः सः सूर्यःस्वाक्रान्तराशिषष्ठस्थितैः शनिवर्जितैर्ग्रहैर्विद्ध-श्चेत्तदा शुभफलद इत्यर्थः । अथैतस्यैव द्विविधवेधस्य देश-विशेषविषयत्वमुच्यते । हिमाद्रिविन्ध्यनामानौ पर्वतौ प्रदे-शविशेषावस्थया प्रसिद्धौ तयोरन्तरालवर्त्तिन्येव देशे स द्विविधोऽपि वेधोज्ञेयः न सर्वदेशेषु हिमाद्रिविन्ध्यान्तराल बहिर्भूतसर्वदेशेषु द्विविधोऽपि वेधदोषो नास्तीति कश्य-पस्य मुनेर्वाक्यवचनम् । जन्मनक्षत्रादौ स्थानभेदे ग्रहण-फलमाह जन्मार्क्ष इत्यादि । “यस्य जन्मगतो राहुर्ग्रसते चन्द्रभास्करौ । तज्जातानां भवेत्पीडा ये नराः शान्तिव-र्जिताः ।” भार्गवीये विशेषोऽपि “यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते । राज्यभङ्गं सुहृन्नाशं मरणं चात्र निर्दिशेदिति” राज्यस्य नक्षत्रे अभिषेकनक्षत्रे यदा-

कदाचिद्राहुभुक्तमानमन्यत्रस्पर्शानन्तकाले यौक्तमेव तदा-श्रं सन्दिग्धफलनिर्देशः यदा तु नक्षत्रभेदस्तदोपर-क्तमानमन्यकालेऽप्येव फलनिर्देशः एवं राशिभेदेऽपरक्त-मानराशिभेदेऽप्येवम् । यतोऽवगते राहो र्दिग्देश-कालावरणादिभेदात् ग्रहणत्वमेव नास्ति । तदुक्तं सिद्धान्तशिरोमणौ “दिग्देशकालावरणादिभेदान्न च्छा-दकोराहुरिति ब्रुवन्ति”। एतदुपपत्तिर्भास्करेण स्वप-रोदेव निरूपिता पितृचरणैश्च तोडरानन्दे राहुचार-विचारे प्रपञ्चिता परन्तु राहुसाहित्यं विना ग्रह-णानयनस्य शरसंस्कृतिमाश्रित्य स्पष्टानयनविशिष्टत्वानु-करत्वादिति साहित्यविवक्षयैव राहोरुपरक्तत्वमुच्यते । अतएवोक्तं वराहेण “तस्मिन् काले सान्निध्यमस्य तेनोपचर्यते राहुः । याम्योत्तरा शशिगतिर्गणिते ह्युप-चर्यते तेनेति”५ । अथ जन्मादिराशिफलमुच्यते ज्ञानभ-न इति । पञ्चम्यालब्धि जन्मराशेरारभ्य द्वादशसु राशिषु ग्रहणे सति क्रमादनुक्रमेण घातादिफलं भवति यथा जन्मराशौ ग्रहणे सति घातः शरीरपीडा, द्वितीय-राशौ क्षतिः द्रव्यनाशः, तृतीयराशौ श्रीर्लक्ष्मीः, चतु-र्थराशौ शरीरपीडा, पञ्चमराशौ चिन्ता पुत्रादीनां, षष्ठ राशौ सौख्यं, सप्तमराशौ कलत्रदोषस्य स्त्रीमरणं, अष्टम-राशौ मृत्युर्मरणं, नवमराशौ माननाशः, दशमराशौ सुखम्, एकादशराशौ लाभः, द्वादशराशौ मृत्युः अपा-त्मन इति केचित् द्रव्यस्येत्यपरे, इदं च फलं षण्मासप-र्यन्तमनुक्तमपि ध्येयं तदुत्तरं हि ग्रहणान्तरसम्भावनात् यथोक्तं दैवज्ञमनोहरे “घातं हानिमथ श्रियं जननिभा-दुध्वंसं च चिन्तां क्रमात् सौख्यं दारवियोजनं च कुरुते व्याधिं च मानक्षयम् । सिद्धिं लाभमपायमर्कश-शिनोः षण्मासमध्ये ग्रहः इति” कश्चित्तु “स्थानान्त्र एवं शुभमध्यमाधमाः” इत्युक्तम् । दैवज्ञमनोहरे “पाद्यात्तृतीयोऽष्टमचतुर्थस्तथायसंस्थः शुभदः स्व-राशिः । नवांशधीसप्तमगश्च विज्ञैः पूज्यो द्विषट्को दशमाद्यसंस्थः” इति अत्र वाक्ये पादराशितोगणनोक्ता “त्रिषड्दशायोपगतं नराणां शुभप्रदं स्याद्ग्रहणं रवीन्द्वोः । द्विसप्तनन्देषु च मध्यमं स्याच्छेषेष्वनिष्टं मुनयो वदन्तीति” अत्रावश्यपेक्षायां स्वजन्मराशे-रित्याध्याहार्यमेव । अथाशुभसूचकग्रहणप्रतीकार-माह तदशुभेति । तत्र सूर्यचन्द्रयोर्ग्रहणस्य सम्बन्धि यदशुभं दुष्टफलमस्य भङ्ग्यै नाशाय जपः स्वर्णगो-दानं जपो गायत्र्यादीनां मन्त्राणां स्वर्णं प्रसिद्धं गौः प्रसिद्धा भूमिर्धा उपलक्षणत्वादन्येषां द्रव्यादीनां यथा यक्त्या दानं कार्यमिति शेषः उक्तं च दैवज्ञमनोहरे “सुवर्णनिर्मितं नागं सतिलं ताम्रभाजनम् । सदक्षिणं सवस्त्रं च श्रोत्रियाय निवेदयेत् । सौवर्णं राजतं वापि बिम्बं कृत्वा स्वशक्तितः । भवेदुपगतक्लेशः छिद्रे विप्राय कल्पयेत् । दानमन्त्रश्च । तमोमय ! महाभीम ! सोमसूर्यविमर्दन ! । हेमनाग ! प्रदानेन मम शान्तिप्रदो भव” । स्कन्दपुराणे गोदानं भूमिदानं च स्वर्णदानं विशेषतः । ग्रहणे क्लेशनाशाय दैवज्ञाय निवेदयेत्” । किञ्चात्र देशविशेषः पात्रविशेषो द्रव्यविशेषश्च नापेक्ष्य इत्याह व्यासः “सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः । सर्वभूमिः कुरुक्षेत्रं ग्रहणे चन्द्रसूर्ययोरिति” । तत्र स्नानदानादिकं कस्मिन् काले कर्त्तव्यमित्याह “ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते । मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयत” इति तस्मिन् काले जपादिकमपि विधेयम् “सूर्येन्दुग्रहणं याव-त्तावत् कुर्याज्जपादिकमिति” शिवरहस्योक्तेः आदिशब्दात् सुरार्चनमपि अत्र जन्मनक्षत्रजन्मराश्योर्ग्रहणशान्ति-माह वशिष्ठः “यस्यैव जन्मनक्षत्रे ग्रस्येते शशिभास्करौ तस्य व्याधिभयं घोरं जन्मराशौ धनक्षयः । द्रव्यमन्त्रवि-धानेन तस्य दोषापनुत्तये । उपरागस्नानविधिं सम्यक् वक्ष्ये समासतः । मण्डलं चतुरस्रं तु गोमयेन विलेपयेत् । गृहस्य प्रागुदिग्भागे वर्णकैः समलङ्कृते । स्थापयेच्चतुरः कुम्भांस्तत्र तान् सागरात्मकान् । सप्तवेदात्मकान् कृत्वा सर्वतीर्थात्मकान् शुभान् । पञ्चवोशीरसायुक्तसर्वौषधिस-मन्वितान् । मृत्तिकाहेमरत्नेन दग्धगुग्गुलचन्दनैः । पञ्चगव्याक्षतभाजिस्फटिकैः सर्वपावनैः” । इत्युपक्रमे “तिलहोमं व्याहृतिभिः सहस्रमष्टसंयुतम् । एवं कृत्वा प्रयत्नेन स्नानकर्म समाचरेत् । आमन्त्र्य नवभिर्मन्त्रैः कुम्भान् संकल्पपूर्वकान् । एतानेव ततो मन्त्रान् वर्णयेच्चैव संलिखेत् । कर्तुः शिरसि तं बद्ध्वा वार्त्तिकैर्वेदमन्त्रकैः । समन्वितैः कुम्भजलैः स्नाप्यं नीराजयेत्ततः । दद्यात्क्रमशो विप्रेभ्यः शुक्लमाल्याम्बरः शुचिः । ऋत्विग्भ्यो दक्षिणां दद्याच्छिष्टेभ्यश्च स्वशक्तितः । योऽसौ वज्रधरो देव आदि-त्यानां प्रभुर्मतः । सहस्रनयनश्चन्द्रग्रहपीडां व्यपोहतु १ । यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः । यमश्चन्द्रो-परागस्य ग्रहपीडां व्यपोहतु२ । रक्षोगणाधिपः

येत् । यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी । विश्वरूपः परो देवः प्रीयताममया गवा । अनुव्रज्य तु तां धेनुं ब्राह्मणेन समन्विताम् । गोमतीन्तु ततो विद्यां जपेत प्रयतः शुचिः । उद्दिश्याथ वासुदेवं प्रीयतामिति चानघ ! । पात्रं मनसि सञ्चिन्त्य तोयमप्सु विनिक्षिपेत् । जलशायी ब्रह्मपिता पद्मनाभः सनातनः । अनन्तभोगशयनः प्रीयतां परमः पिता” । गोमतीमाह यमः “गावः सुरभयोनित्यं गावोगुग्गुलगन्धिकाः । गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् । अन्नमेव परं गावो देवानां हविरुत्तमम् । पावनं सर्व्वभूतानां रक्षन्ति च वहन्ति च । हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि । ऋषीणामग्निहोत्रेषु गावो होमप्रतिष्ठिकाः । सर्व्वेषामेव भूतानां गावः शरणमुत्तमम् । गावः पवित्रं परमं गावो मङ्गलमुत्तमम् । गावः स्वर्गस्य सोपानं गावोधन्याः शुभावहाः । नमोगोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति” । अत्रापि गोमती, महाभारतोक्ता तिलधेनुदाने दर्शिता । “ततस्तानयोर्विकल्पानुष्ठानमिति । सर्व्वगोदानसाधारणं मन्त्रमाह वशिष्ठः । “घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्त्तास्ता मे सन्तु सदा गृहे । घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् । घृतं मे सर्व्वतश्चैव घृतं मे मनसि स्थितम् । गावोममाग्रतोनित्यं गावः पृष्ठतः एव च । गावोमे सर्व्वतश्चैव गवां मध्ये वसाम्यहम्” । “इत्याचम्य जपन् सायं प्रातश्च पुरुषः सदा । यदह्ना कुरुते पापं तस्मात् स परिमुच्यते”। दक्षिणा चात्र सुवर्णम् यदाह वशिष्ठः “सुवर्णं दक्षिणामाहुर्गोदाने महाफले । सुवर्णं परमं ह्यायुर्दक्षिणार्थे न संशयः । गोप्रदानन्तारयते सप्त पूर्व्वान् नरांस्तथा । सुवर्णं दक्षिणां दत्त्वा तावद्द्विगुणमुच्यते । सुवर्णं परमं दानं सुवर्णं दक्षिणा परा । सुवर्णं पावनं प्राहुः परिमाणं परन्तथा” अत्र सुवर्णशब्दस्य हिरण्यपर्य्यायत्वे यथाशक्त्यनुष्ठानम् । अपरे त्वाहुः सकृदुच्चरितसुवर्णशब्दावगतपरिमाणार्थपरित्यागानुपपत्तेः सुवर्णशब्दस्य प्राहुरित्यादिक्रियाकर्म्मभूततया द्वितीयान्तत्वेन लिङ्गविशेषानवधारणाच्च परिमाणार्थतैव न्याय्येति । एवं च यथानियतानुष्ठानप्रसङ्गः तथा परिमाणपरत्वमेवेत्येतदपि समञ्जसं स्यात्” । वर्णभेदेन गोदानफलादि तत्रोक्तं यथा

“कृष्णाङ्गान्ददते यस्तु पट्टच्छन्नां स्वलङ्कृताम् । घण्टामालाकुलां कृत्वा पुष्पैश्चैवाप्यलङ्कृताम् । विधिवच्च द्विजातिभ्यो यमलोकं न पश्यति । आयुरारोग्यमैश्वर्यं दाता कामांश्च मानवान् । श्वेताङ्गान्ददते यस्तु दिव्यरत्नैरलङ्कृताम् । घण्टामालाकुलां कृत्वा पुष्पैश्चैवाप्यलङ्कृताम् । मुखे धूपः प्रदातव्यो घृतेनाक्तश्च पूरयेत् । सुवर्णशृङ्गाभरणा तथा रौप्यखुरा शुभा । पट्टच्छन्ना शुभा चैव दातव्या ध्यानयोगिने । यस्तु दद्याच्च गां श्वेतां तस्य पुण्यफलं शृणु । जन्मप्रभृति यत् पापं मातृकं पैतृकं च यत् । कुलोत्पन्नस्य भूतस्य तत्क्षणात् देव नश्यति । गान्ददानीह दृष्ट्वैव वाचा पूयेत सर्व्वशः । पिता पितामहश्चैव तथैव प्रपितामहः । नरकस्थाः प्रमुच्यन्ते सोमलोकं व्रजन्ति ते । गौरीं चैव प्रयच्छेत्तु यस्तु गां वै नरः शुचिः । अहोरात्रोषितश्चैव कृतशौचोनरः सदा । स्वर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् । घण्टामालाकुलां चैव गन्धपुष्पैरलङ्कृताम् । कुशपट्टास्तरेत् प्राज्ञो मुखे धूपं प्रदापयेत् । भक्ष्यभोज्यान्नपानेन ब्राह्मणान् भोजयेत् पुमान् । गान्ददानीह दृष्ट्वैव वाचा पूयेत सर्व्वशः । मातृकं पैतृकं चैव यच्चान्यद्दुष्कृतं भवेत् । पापस्य तस्य तत् सर्व्वं दहत्यग्निरिवेन्धनम् । वर्षकोटिसहस्रन्तु पुमान् स दिवि मोदते । दासीदासैरलङ्कारैः स्तूयते सर्व्वजन्तुभिः । अरोगश्चैव जायेत तेजस्वी च भवेन्नरः । नीलवर्णाञ्च गान्ददाद्दोगर्भीं शीलगुणान्विताम् । स्वर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् । पट्टच्छन्नां शुभां सौम्यां घण्टादामैरलङ्कृताम् । पञ्चरङ्गेण सूत्रेण गलवेष्टनशोभिताम् । रुद्रस्य प्रमुखे देया विष्णोश्च ब्रह्मणश्च ह । गां ददानीह दृष्ट्वैव वाचा पूयेत सर्व्वशः । पिता पितामहश्चैव तथैव प्रपितामहः । नरकस्थाः प्रमुच्यन्ते नीलां गां ददते तु यः । वर्षकोटिसहस्राणि लोके तिष्ठति वारुणे । दधिक्षीरवहा नद्यो वसन्ते सर्व्वतः सदा । घृतशैलाः प्रपद्यन्ते नवनीतस्य पर्व्वताः । कृषिभागी बहुधनो दुर्भिक्षञ्च न पश्यति” ।

सवर्णवत्ससहितायाः कपिलादिकायागोर्दानविधिस्तत्रैव महाभारते ।

“समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम् ।

सुव्रतां वस्त्रसञ्छन्नां ब्रह्मलोके महीयते"। समान-
वत्सां समानवर्णवत्साम्। "रोहिणीं तुल्यवत्सां च धेनुं
दद्यात्पयस्विनीम्। सुव्रतां वस्त्रसंवीतां रुद्रलोके मही-
यते। समानवत्सां शबलां धेनुं दत्त्वा पयस्विनीम्।
सुव्रतां वस्त्रसंवीतां सोमलोके महीयते"। शबलां
कर्वुराम्। "समानवत्सां कृष्णान्तु धेनुं दत्त्वा पयस्विनीम्।
सुव्रतां वस्त्रसंवीतामग्निलोके महीयते। वातरेणुसव-
र्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां
वायुलोके महीयते। समानवत्सां धूम्रान्तु धेनुं दत्त्वा
पयस्विनीम्। सुव्रतां वस्त्रसंयुक्तां यमलोके महीयते।
अब्ध्यां हेमसवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय
वस्त्रसंवीतां वारुणं लोकमश्नुते। अब्ध्यां, गोः। काम-
दोहनां अनायासदोह्याम्। "हिरण्यवर्णां पिङ्गाक्षीं
सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां कौवेरं
लोकमाप्नुयात्"। पलालधूम्रवर्णान्तु सवत्सां कामदोह-
नाम्। प्रदाय वस्त्रसंवीतां पितृलोके महीयते। सवत्सां
पीवरीन्दत्त्वा शितकण्ठीमलङ्कृताम्। वैश्वदेवमसम्बाधं
स्थानं श्रेष्ठं प्रपद्यते। शितकण्ठीं कृष्णगलाम्। "समान-
वत्सां गौरीन्तु धेनुन्दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसं-
वीतां वसूनां लोकमश्नुते। सुव्रता सुखदोह्या। "पाण्डु-
कम्बलवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां
साध्यानां लोकमश्नुते। वत्सोपपन्नां नीलाङ्गीं सर्व-
रत्नसमन्विताम्। गन्धर्वाप्सरसां लोकान् दत्त्वा प्राप्नोति
मानवः। गोप्रदानरतो याति भित्त्वा जलदसञ्चयान्।
विमानेनार्कवर्णेन दिवि राजन्! विराजते। तम्राव-
वेशाः सुश्रोण्यः सहस्रं वरयोषितः। रमयन्ति नर-
श्रेष्ठं गोप्रदानरतन्नरम्"।
देवतोद्देशेन गोदानविधिस्तत्रैव वह्निपुराणे
"देवदक्षिणदिग्भागे धेनुः कार्य्या उदङ्मुखी।
प्राङ्मुखं वत्सकं कृत्वा ब्राह्मणं च उदङ्मु-
खम्। प्राङ्मुखो यजमानस्तु पूजयेद्ब्राह्मणं ततः।
कोऽदादिति च मन्त्रेण प्रतिगृह्णीयाद्ब्राह्मणः स्वयम्"।
देवोऽत्र महेश्वरः। "एवंविधानतो दत्त्वा याति
दाता शिवालयम्। तत्र भुक्त्वाक्षयान् भोगानन्ते
मच्छति शाश्वतम्"। देवीपुराणे "नीलां वा यदि
वा श्वेतां पाटलां कपिलामपि। बहुक्षीरां बहुवत्साञ्च
सुखदोह्यां सुगां नृप"। "आदाय विधिवद्देवीं पूजये-
च्च मधुद्रुजैः। धूपन्तु पञ्चनिर्यासमगुरुं चन्दनम्।
दत्त्वा तु मन्त्रपूर्वन्तु नैवेद्यमुपकल्पयेत्। पायसं घृत-
संयुक्तं प्राशयेच्च तथा तु ताम्। द्विजाय शिवभक्ताय
सवत्साञ्च निवेदयेत्। सहेमवस्त्रकांस्यां च महापुण्यमवा-
प्नुयात्। यावन्त्यो रोमसंख्यानि तावद्देवाः पुरं वसेत्।
इहैव गतपापोऽसौ जायते नृपसत्तम!।" विष्णुधर्म्मे
"मान्धाता उवाच। ब्राह्मणः प्रीणनार्थाय केशवस्य
शिवस्य च। यानि दानानि देयानि तान्याचक्ष्व द्विजो-
त्तम!। येन चैव विधानेन दानं पुंसः सुखावहम्।
ऐहिकामुष्मिकार्थञ्च करोति न विहन्यते। वशिष्ठ
उवाच। गोदानमादौ वक्ष्यामि प्रत्यक्षकर्मयोगतः।
"येन चैव विधानेन धेनुं नाधिकविस्तरम्। पुण्येऽह्नि नम-
श्चाद्य स्नात्वाऽऽतर्प्य पितॄंस्तथा। कृतोपवासः सम्प्राश्य
पञ्चगव्यं नरेश्वर!। घृतक्षीराभिषेकञ्च कृत्वा विष्णोः
शिवस्य च। समभ्यर्च्य यथान्यायं पुष्पादिभिरनुक्र-
मात्। उदङ्मुखीं प्राङ्मुखीं वा गृष्टिं कृत्वा पय-
स्विनीम्"। गृष्टिः सकृत्प्रसूतेत्यर्थः। "सपुत्रां वस्त्रसंवीतां
सितयज्ञोपवीतिनीम्। स्वर्णशृङ्गीं रौप्यखुरां सुवर्णा-
परिसंस्थिताम्। शक्तितो दक्षिणायुक्तां ब्राह्मणाय
निवेदयेत्। गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्। प्रदक्षिणं
ततः कृत्वा धेनुं द्विजवरस्य तम्। इमां नः प्रतिगृह्णीष्व
धेनुर्दत्ता मया तव। स मे पापापनोदाय गोविन्दः
प्रीयतामिति"। वह्निपुराणे तु अयमधिको मन्त्रः।
"या धेनुः काश्यपस्यासीद्दत्तेर्वा गोतमस्य च। साभि-
कामफला देवी इह लोके परत्र चेति। एवमुच्चार्य्य
तं विप्रं गोविन्दं नृप! कल्पयेत्। अनुव्रजेच्च गच्छन्तं
पदान्यष्टौ नराधिप!। अनेन विधिना धेनुं यो विप्राय
प्रयच्छति। सर्वकामसमृद्धात्मा विष्णुलोकं स गच्छति।
सप्तावरान् सप्तपरानात्मानञ्चैव मानवः। सप्तजन्मकृतात्
पापान्मोचयत्यवनीपते!। पदेपदेऽश्वमेधस्य गोवत्सस्य
च मानवः। फलमाप्नोति राजेन्द्र दद्यादेवङ्गवां हरिः।
सर्वकामदुघा सम्यक् सर्वकालेषु पार्थिव!। भवन्त्यघो पा-
पहरा यावदिन्द्राश्चतुर्दश। सर्वेषामेव पापानां कृता-
नामविजानता। प्रायश्चित्तमिदं प्रोक्तमघतापापहं हि-
तम्। सर्वेषामेव देवानामेकजन्मानुगं फलम्।
स्फाटिकाक्षितिगौरीणां सप्तजन्मानुगं फलम्। ब्रा-
ह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः। लोकाः
कामदुघाः प्राप्ता दत्त्वैतद्विधिना नृप!। गोभ्योऽ-

धिकं जगति नापरमस्ति किञ्चिद्दानम् पवित्रमिति मार्कण्डेयोवदन्ति। ताः षडदः सुरसदश समीह-मानैर्देया सदैव विधिना द्विजपुङ्गवेभ्यः।"

"अतः परन्तु गोदानं कीर्त्तयिष्यामि तेऽनघ!। गावोऽधिकास्तपस्विभ्यो यस्मात् सर्वेभ्य एव च। तस्मान्महेश्वरो देवस्तपस्ताभिः सहास्थितः। ब्रह्मलोके वस-न्त्येताः सोमेन सह भारत!। यान्तां ब्रह्मर्षयः सिद्धाः प्रार्थयन्ति परां गतिम्। पयसा हविषा दध्ना शकृता चाथ चर्मणा। अस्थिभिश्चोपकुर्वन्ति शृङ्गैर्बालैश्च भारत!। नासां शीतातपौ स्यातां सदैताः कर्म कुर्वते। न वर्षविषयं वापि दुःखमासां भवत्युत। ब्राह्मणैः सहिता यान्ति तस्मात् पारमकं पदम्। एकं गोब्रा-ह्मणं तस्मात् प्रवदन्ति मनीषिणः। रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः। अतश्चर्मण्वती राजन्। गोचर्मभ्यः प्रवर्त्तिता। पशुत्वाच्च विनिर्मुक्ताः प्रदाना-योपकल्पिताः। ता इमा विप्रमुख्येभ्यो यो ददाति महीपते!। निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पा-र्थिव!। गवां सहस्रदः प्रेत्य नरकं न प्रपद्यते। सर्वत्र विजयञ्चापि लभते मनुजाधिप!। अमृतं वै गवां क्षीरमित्याह त्रिदशाधिपः। तस्माद्ददाति यो धेनुममृतं स प्रयच्छति। अग्नीनामव्ययं ह्येतद्धौम्यं वेदविदो विदुः। तस्माद्ददाति यो धेनुं स हौम्यं सम्प्र-यच्छति। स्वर्गो वा मूर्त्तिमानेष, वृषभं यो गवां पतिम्। विप्रे गुणयुते दद्यात् स वै स्वर्गे महीयते। प्राणा वै प्राणिनामेते प्रोच्यन्ते भरतर्षभ!। तस्माद्ददाति यो धेनुं प्राणानेष प्रयच्छति। गावः शरण्या भूतानामिति वेदविदो विदुः। तस्माद्ददाति यो धेनुं शरणं स प्रयच्छति। न वधार्थं प्रदातव्या न कीनाशे न नास्तिके। गोजीविने न दातव्या तथा गौर्भरतर्षभ!। ददत् स तादृशानां वै नरो गां पापकर्मणाम्। अक्षयं नरकं यातीत्येवमाहुर्मनीषिणः। न कृशां पापवत्सां वा वन्ध्यां रोगान्वितां तथा। न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय च। दशगोसहस्रदो हि शक्रेण सह मोदते। अक्षयान् लभते लोकान्नरः शतसहस्रदः॥ भा०आनु० ६६ अ०

**गोदारण** न० गां भूमिं दारयति दृ—णिच्—ल्यु। १कु-द्दाले अमरः। २हले हेमच०।

**गोदावरी** स्त्री गां जलं ददाति स्वामात् दा—वनिप् ङीप् रश्चान्तादेशः। स्वनामख्याते नदीभेदे सा च नदी दक्षिणस्यां दण्डकारण्यसमीपस्था यथाह "सतत्त्व यर-मङ्गं स दण्डकारण्यमाश्रितः। नदीं गोदावरीं रम्या-माश्रित्य न्यवसत्तदा" भा०व०२७६अ०। "ततो गोदा-वरीं प्राप्य नित्यं सिद्धनिषेविताम्। गवामयमवाप्नोति वासुकेर्लोकमुत्तमम् भा०व०८५अ०। "गङ्गे! च यमुने! चैव गोदावरि! सरस्वति!। नर्मदे! सिन्धु! कावेरि! जलेऽस्मिन् सन्निधिं कुरु"। जले तीर्थावाहनमन्त्रः।

**गोदुग्ध** न० ६त०। गोः क्षीरे। भावप्र० तद्गुणा उक्तास्तद्वाक्यं गोशब्दे दर्शितम्। वर्णभेदेन गोदुग्धस्य गुणाश्च-त्रैव "कृष्णाया गोर्भवं दुग्धं वातहारि गुणाधिकम्। पीताया हरते पित्तं तथा वातहरं भवेत्। श्लेष्मलं गुरु शुक्लाया रक्तायाश्चापि वातहृत्। बालवत्सविव-त्सानां गवां दुग्धं त्रिदोषकृत्। वष्कयिण्यास्त्रिदोषघ्नं तर्पणं बलकृत् पयः। जाङ्गलानूपशैलेषु चरन्तीनां यथो-त्तरम्। पयो गुरुतरं स्नेहो यथाहारं प्रवर्त्तते। खल्यन्नभक्षणाज्जातं क्षीरं गुरु कफप्रदम्। तत्तु बल्यं परं वृष्यं स्वस्थानां गुणदायकम्। पलालतृणका-र्पासबीजजं रोगिणो हितम्" राजनि०तु "गवां प्रत्यूषसि क्षीरं गुरु विष्टम्भि दुर्जरम्। तस्मादभ्युदिते सूर्ये यामं यामार्द्धमेव वा। समुत्तार्य पयोग्राह्यं तत्-पथ्यं दीपनं लघु। विवत्साबालवत्सानां पयो दोष-समीरितम्। यस्तं वत्सैकवर्णाया यवलीकृष्णायोरपि" दृष्टादा मासपर्णादा जर्द्धशृङ्गी च या भवेत्। तासां गवां हितं क्षीरं शृतं वाऽशृतमेव वा। गवां सितानां वातघ्नं कृष्णानां पित्तनाशनम्। श्लेष्मघ्नं रक्तवर्णानां क्षीरं हन्ति कपिलापयः" राजनि०।

**गोदुग्धदा** स्त्री गोर्दुग्धं ददाति सम्पादयति दा—क। चणिकातृणे राजनि०। तद्भोजनाद्गोर्दुग्धवृद्धे-स्तस्यास्तथात्वम्।

**गोदुह्** त्रि०गां दोग्धि दुह—क्विप् ६त०। १गोदोहके (दोग्धरि) "चिरं निदध्यौ दुहतः स गोदुहः" माघः। २गोपे च "चेतोऽस्माकं गुणवदगुणं गोदुहां देहमेतत्" उद्भट०। दुह—क। गोदुहोऽप्यत्र पु०।

**गोदोह** पु० भावे घञ्। ६त०। "१गोदोहने। "रुद्रायतने भूमौ गोदोहात् कोटिहोमाच्च" ह०स० २६अ०। कर्मणि घञ्। "यज्ञकर्मकालाभिधीने देयः कालो भावो नामयोऽस्वा च कर्मसंज्ञ इति वाच्यम्" वार्त्ति० अस्मादेः

मासमास्ते गोदोहमास्ते इत्यादौ सर्वेषामकर्मकधातूनां व्याप्तिगर्भितस्वार्थपरतायां तात्पर्यग्राहकमिदं वार्त्तिकं यथाह हरिः

“कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते। अतस्तैः कर्मभिर्युक्तो धातुर्व्यैरकर्मकः। तस्य कर्मणि भावे च निमित्तत्वाय कल्पते” इति। अस्यायं भावः मासमास्ते गोदोहमास्ते इत्यादौ धातोरेव सम्बन्धपूर्वकासनादौ आसनादिकरणक सम्बन्धे वा निरूढलक्षणाया ज्ञापकमिदं वार्त्तिकम्। तत्र धातोराद्यार्थलक्षणायां प्रधानक्रियाया अकर्मकत्वात् दुहादिषु पाठाभावाच्च गौणकर्मणि लकारासम्भवेन भाव एव लकारस्तेन मासमास्यत इत्येव प्रयोगः। द्वितीयार्थलक्षणायान्तु प्रधानक्रियायाः सकर्मकतया कालादेव तत्कर्मत्वेन मुख्यकर्मण्येव लकारस्तेन मास आस्यते गोदोह आस्यते इति प्रयोग इति विवेकः। अत्र कालेष्वभिधानात् तद्योगे न तेभ्यः षष्ठीति द्योतितमिति मनोरमायां स्पष्टम्। २गोदुग्धे च “द्वौ गोदोहौ कुर्यं घतम्” अमरः। आधारे घञ्। ३गोदोहनकाले च तत्कालश्च मुहूर्त्ताष्टमभागात्मकः यथाह आ॰त॰ विष्णु॰ “ततो गोदोहमात्रं वै कालं तिष्ठेत् बलक्षणे। अतिथिप्रतीक्षणार्थाय तदूर्द्धं वा यथेच्छया” गोदोहनकालश्च मुहूर्त्ताष्टमभागात्मकः “आचम्य च ततः कुर्यात् प्राज्ञो द्वारावलोकनम्। मुहूर्त्तस्याष्टमं भागमुद्वीक्ष्यो ह्यतिथिर्भवेत्” मार्क॰ पु॰ एकवाक्यतात्” आ॰ त॰ रघु॰।

गोदोहन न॰ भावे ल्युट् ६त॰। १गोदोहने। आधारे ल्युट्। २गोदोहनकाले। “न लक्ष्यतेऽप्यवस्थानमपि गोदोहनं क्वचित्” भाग॰१।१९।३९। आधारे ल्युट् ङीप्। गोदोहनी गोदोहनाधारपात्रे गर्ग्यांम् स्त्री जटाधरः।

गोद्रव पु॰ द्रवति द्रु—अच् ५त॰। गोमूत्रे राजनि॰।

गोधन न॰ गवां धनं समूहः। १गोसमूहे गौरेव धनमस्य। २गोरूपधनवति त्रि॰। गौरेव धनम्। ३गोरूपे धने न॰। “अद्यैव किं चिरेण वा व्रजामः सह गोधनैः” हरिवं॰ ६६अ॰ “गोधनेषु प्रतोलीषु वरद्वारमुखेषु च। अन्यसंस्कारदोषेषु पथिषुताखत्र शोभनाः” भा॰वि॰४७अ॰ धन—रवे भावे अप् गोर्धनस्य रव इव रवोऽस्य। ४स्थूलाग्रवाणे पु॰ शब्दक॰ हरिवं॰ मूलं मृग्यम्।

गोधर पु॰ गां पृथिवीं विष्टम्भकतया धरति धर—अच्। महीधरे पर्वते शब्दार्थचि॰

गोधर्म पु॰ गोरिव धर्मः। मैथुनेऽविचाररूपे गोसदृशे धर्मे “गोधर्मं सौरभेयाच्च सोऽधीत्य निखिलं मुनिः (बृहस्पतिः) भा॰आ॰१०४अ॰ उतथ्यशब्दे १०७५पृ॰ दृश्यम्।

गोधा कौटिल्ये कण्ड्वादेराकृतिगणः नामधातुः पर॰ अक॰ सेट्। गोधायति अगोधायीत्।

गोधा स्त्री गुध्यते वेष्ट्यते बाहुरनया करणे घञ्। धनुर्गुणाघातवारणाय प्रकोष्ठे १बध्यमाने चर्मणि। “बद्धगोधाङ्गुलित्रवान्” भा॰ व॰ १७अ॰ “गोधाश्लिष्टभुजा माखैरभूद्भीमा रणाटवी” माघः। “तलघटघटांशब्दो गोधाघातादभूत्तयोः” भा॰ द्रो॰ १२९अ॰। कर्त्तरि अच्। (गोसाप) इति ख्याते २सर्पभेदे स्त्री अमरः “श्वाविधं शल्लकं गोधां खड्गकूर्मशशांस्तथा। भक्ष्यान् पञ्चनखेष्वेतानतुद्रांश्चैकतोदतः” मनुना तन्मांसं पञ्चनखेषु भक्ष्यतयाऽभिहितम्। तन्मांसपाकगुणादि भावप्र॰उक्तं यथा “गोधाञ्छोष्णजलैर्भूयः क्षालितां खण्डशः कृताम्। खिन्नाञ्च तक्रतोयाभ्यां क्षालितां सूक्ष्मखण्डिताम्। तलयेद्वेसवाराद्यैः पचेद्वा विधानतः। विपाके मधुरा गोधा वातपित्तप्रणाशिनी। कषाया कटुका प्रोक्ता कफघ्नी बलवर्द्धिनी।” सा तु स्थलजलजभेदाद्द्विधा। स्वार्थे क। अत्रैवार्थे। गोधायाः अपत्यम् वा ढक्। गौधेर पक्षे शुभ्रा॰ ढक्। गौधेय उदीचा॰ मते आरक्। गौधार तदपत्ये पुंस्त्री ढकि स्त्रीत्वे ङीप् इति भेदः।

गोधापदी स्त्री गोधाया इव पादौ मूलमस्याः स्वाङ्गत्वात् जातित्वाद्वा कुम्भपद्या॰ ङीपि पद्भावः। (गोयालिया) लताभेदे। स्वार्थे क। अत्रैवार्थे रत्नमाला।

गोधायस् त्रि॰ गां दधाति धा—बा॰ असुण् ६त॰। गोधारके “गोधायसं वि धनसैरदर्दः” ऋ॰१०।६९।७।

गोधावीणाका स्त्री गोधायाश्चर्मणा नद्धा वीणा ह्रस्वा सा कन्। ह्रस्वगोधाचर्मनद्धवीणायाम्। “गोधावीणाका काण्डवीणाश्च पत्न्योवादयन्त्युपगायन्ति” कात्या॰श्रौ॰ १३।३।१७

गोधास्कन्ध पु॰ गोधेव स्कन्धोऽस्य। विट्खदिरे। राजनि॰

गोधि पु॰ गौर्नेत्रं धीयते यस्मिन् आधारे इन्। १ललाटे अमरः गुध—इन्। २गोधायां सर्पभेदे शब्दचि॰ गोधि—स्वार्थे क, गोधेव क अत इत्त्वं वा। गोधिका (गोसाप) गोधायाम् अमरः।

गोधिकापुत्र पु॰६त॰। १गोधायामवेक्षि सर्पात् गोधायामुत्पन्ने (सोना गोसाप) इति ख्याते २सर्पभेदे पुंस्त्री शब्दार्थचि॰।

**गोधिनी** स्त्री गुध–णिनि । बृहतीभेदे राजनि० ।

**गोधुम** पु० गुध–बा० उम । गोधूमे शब्दच० ।

**गोधूम** नि० गुध–ऊम । १नागरङ्गे २व्रीहिभेदे च (गोहुम) च मेदिनिः तद्भेदादि भावप्र०उक्तं यथा "गोधूमः सुम-नोऽपि स्यात् त्रिविधः स च कीर्त्तितः । महागोधूम इत्याख्यः पश्चाद्देशात् समागतः । मधूली तु ततः कि-ञ्चिदल्पा सा मध्यदेशजा । निःशूको दीर्घगोधूमः क-चिन्नन्दीमुखाभिधः । गोधूमो मधुरः शीतो वातपित्त-हरो गुरुः । कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत्-सरः । जीवनो वृंहणो वर्ण्यो व्रण्यो वीर्यस्थिरत्वकृत् । कफप्रदः नवीनो न च पुराणः पुराणयवगोधूम क्षौद्रजाङ्गलमूल्यभुगिति" वाग्भटेन वसन्ते स्तुतीत-त्वात् । मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः । शुक्रला वृंहणी पथ्या तद्वन्नन्दीमुखी स्मृता" तस्य कृतान्नशब्दे २१८१पृ० पाकविशेषो दृश्यः ।

**गोधूमक** पुंस्त्री गोधूम इव कं शिरोऽस्य । राजिमत् सर्प-भेदे अहिशब्दे ५८१ पृ० सुश्रुतवाक्यं दृश्यम् ।

**गोधूमचूर्ण** हैम० (मयदा) इति ख्याते पदार्थे "शुष्कगो-धूमचूर्णेन किञ्चित् पुष्टां तु रोटिकाम्" भाव०प्र०। कृता-न्नशब्दे दृश्यम् ।

**गोधूमसम्भव** न० सम्भवत्यस्मात् सम्+भू–अपादाने अप् गोधूमः सम्भवोऽस्य । सौवीरे काञ्जिकभेदे राजनि० ।

**गोधूमसार** पु०हैम०। (गोहमेरपालो) इति ख्याते गोधूमस्य सारांशे तत्करणप्रकार: पाकराजेश्वरे "निस्तुषान् गोधूमान्तुदूखले कण्डयित्वा वायङ्काले मृत्तिकादिपात्रे जले मग्नं कृत्वा परदिने प्रभातसमये उपरिस्थं जलं क्रमेण दूरीकृत्याऽधःस्थं सारमातपे शुष्कं कृत्वा पात्रान्तरे स्थापयेदिति" । [गोक्षोभिकायां राजनि०।

**गोधूमी** स्त्री गां धूमयति धूम+णिच्–अण् गौरा० ङीप् ।

**गोधूलि** स्त्री गवां खुरोत्थितो धूलिरत्र काले। गवां प्रचार-देशात् स्वस्थानगमनकाले गोखुरोद्धृतधूलियुक्ते समयभेदे स च कालो यथा "सन्ध्यातपार्द्धमितपश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकसन्निवेशे । दत्ते गवां खुरपुटो-द्गलितैरजोभिर्गोधूलिरेव कथितो भ्रमुखेन योगः" पी० धा० धृतवाक्योक्तः उपयमशब्दे १२७५।७६पृ० अस्य विहितदेशस्या "तिथ्यादिषु निषिद्धेषु चन्द्रताराविरोधतः । अर्थं गोधूलियोगं वा कोविदा गमनं चरेत् । प्राच्या-मुदां प्रतीच्याञ्च गोधूलिं वर्जयेन्नृपः । दक्षिणे चाभि-जिद्वत्सरे च निशां तथा" । ज्यो० त० वराहः गोरजस्य शब्दोऽप्यत्र उपयमशब्दे २५७५।७६पृ० उदा०

**गोधेनु** स्त्री गौर्धेनुः जात्या समासे परनिपातः । दुग्धवत्यां सवत्सायां गवि

**गोधेर** नि० गुध–एरच् । गोप्तरि जयादिकोषः

**गोध्र** पु० गां भूमिं धरति धृ–मूलवि० क । महीधरे पर्वते

**गोनन्दी** स्त्री गवि जले नन्दति नन्द–अच् गौरा०ङीप् । १सारसपक्षिण्यां हारा० स्कन्दस्य २गणभेदे पु० "प्रियक-श्चैव नन्दश्च गोनन्दश्च प्रतापवान्" भा०शल्य०४६अ०

**गोनर्द्द** पु० गवि जले नर्दति नर्द–अच् । १सारसखगे मेदि० गवा जलेन नर्दति । २कैवर्त्तीमुस्तके न० मेदि० । गवा वाचा नर्दते अच् । ३देशभेदे पु० स च कूर्मविभागे बृ०स० १४ अ०दक्षिणस्यामुक्तः "अथ दक्षिणेन लङ्का" इत्युपक्रमे "दशपुरगोनर्दकेरलाः" । सोऽभिजनोऽस्य अण् । गौनर्द तद्देशवासिनि बहुषु अणो लुक् । तद्देशवासिषु ब० व० । गोनर्दनीचम्बूकान् वैदेहा-न्वानयः समृगति" बृ०स० ९अ० ।

"तद्राजेऽपि अण् । गौनर्द तन्नृपे "काश्मीरराजो गोनर्दीदरदाधिपतिर्नृपः" काश्मीर राजो गोनर्दः कद्रुपाधिपतिस्तथा" हरि०९१अ० बहुषु तस्य लुप् । गवि इव नर्दते नर्द–अच् । ४महादेवे पु० "गोनर्दो गोप्रभावश्च गोवृषेश्वरवाहनः" भा०शा०२८६अ०। दक्षकृत शिवस्तुतौ । गोनर्दे देशे भवः "एङ् प्राचां देशे" पा० वृद्धसंज्ञत्वात् छः । गोनर्दीय तद्देशभवे त्रि०प्राच्योऽप्यमते अण । गौनर्द तत्रार्थे त्रि० ।

**गोनर्दीय** पु० गोनर्दे देशे भवः एङ्प्रादित्वेन वृद्धसंज्ञत्वात् छ। पतञ्जलिमुनौ हेमच० । तस्य गोनर्ददेशोद्भवकथा बृहत् कथायां दृश्या सरकोपोद्घातेऽस्माभि दिङ्मात्रमुक्ता ।

**गोन(ना)स** पु०स्त्री०गौरिव नासा अस्य वा नसादेशः। महाफणि सर्पभेदे (गोखुरासाप) अमरः स्त्रियां जातित्वात् ङीष्। दीर्घमध्य इति हेमचन्द्रः । अहिशब्दे ५८१पृ० सुश्रुतवाक्यं दृश्यम् । गोनसस्तदाकारोऽस्त्यस्या अच् गौरा० ङीष् । २ओषधिभेदे स्त्री । सुश्रुते सप्तस्थादि तस्य १५६१ पृ० उक्तम् । दीर्घमध्यस्य ३वैक्रान्तमणौ हेमच० [मिनि च ।

**गोनाथ** पु० हैम० । १वृषे राजनि० । २भूमिनाथे ३गोस्वा-

**गोनाय** पु० गां नयति नी–अण् । १गोपे शब्दार्थचि० । "तद्यथा गोनायोऽस्मनायः पुरुषनायः" इति जा०उप० । "गोनायः गोपालकः" भा० ।

**गोनिष्यन्द** पु० गोर्निष्यन्दते निष्यन्द–अच् ५ त०। गोमूत्रे राजनि०। तस्य गोतो निष्यन्दमानत्वात्तथात्वम्।

**गोप** पु०स्त्री गां भूमिं वा पाति रक्षति पा–क। (गोयाला) १जातिभेदे स्त्रियां ङीष्। "व्याधांश्छाकुनिकान्" गोपान् मनुः। "मणिवन्द्यां तन्तुवायात् गोपजातेश्च सम्भवः" पराशरः "सच्छूद्रौ गोपनापितौ" इत्युक्तेः तस्य सच्छूद्रत्वम् २ग्रामाधिकृते ३भूरक्षके, च पु०। ४गोष्ठाध्यक्षे च मेदि०। गोरक्षकमात्रे च। "गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम्। गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः" मनुः। "नन्दगोपगृहे जाता यशोदा गर्भसम्भवा" देवी भा०। "गोपवधूटी दुकूलचौराय" भाषा० "तद्वनं तापसा नित्यं गोपाश्च वनचारिणः" भा० व० १२ अ०।
गोपयति गुप–अच्। ६रक्षके। "सर्वे देवा भुवनस्यास्य गोपाः" भा०आनु० १० अ०। कश्चिच्चिकर्म्मण्युपपदे गुप–अण्। भूगोपादि तत्तद्वस्तु पालके। "दिव्यास्त्रविन्महातेजाः कर्णो वैकर्त्तनो वृषः। सेनागोपश्च कथम्" भा० कर्ण० ८ अ०। "घृतगोपे वृकोदरे" भा० आ० २०। अ०। स्त्रियां अणन्तत्वात् ङीप्। तस्य गो० गौरा०ङीष् पा०। "शालि गोप्योजगुर्गुणान्" रघुः। ७ उपकारके त्रि० शब्दर०। गां जलं पिबति पा-क। ८ बोले शब्दार्थचि०।

**गोपक** त्रि०गोप वा स्वार्थे क गुप–ण्वुल्। १गोपे २बहुग्रामाध्यक्षे। ३रक्षके टाप् स्त्रियां ङीष्। ततः शिवा० अपत्ये अण्। गौपक गोपिकापत्ये पुं०स्त्री।

**गोपकन्या** स्त्री गोपस्य कन्येव प्रियतया। १शारिवौषधौ राजनि०। ६त०। गोपजातिकन्यायां च "बल्लवीर्गोपकन्याश्च रात्रौ संकाल्य कालवित्" नाम दामोदरेत्येवं गोपकन्यास्तुदाजगुः" हरिव०७७ अ०

**गोपकर्कटिका** स्त्री गोपप्रिया कर्कटिका शाक० त०। (राखालशसा) ख्याते वृक्षे राजनि०।

**गोपघोण्टा** स्त्री० गोपप्रिया घोण्टा शा ०त०। "बदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत्। अटव्यामेव सा घोण्टा गोपघोण्टेति कीर्त्तिता" शब्दर० उक्ते १वृक्षे। २इस्तिकोषी, रत्नमा०।३विकङ्कतवृक्षे (वैंची) राजनि०।

**गोपति** पु० ६त०। गवां पशूनां पत्यौ १शिवे, २वृषे, (षाँड) "रक्षसां वधमापन्नं सिंहानामिव गोपतिम्" रामा०। भूमिपतौ ३नृपे ४गोलक्षणे, किरणपतौ ५सूर्य्ये, ६स्वर्गपतौ शक्रे, मेदिनिः। ७ऋषभनामौषधौ राजनि०। "गोपालिर्गोपतिर्ग्रामो गोचर्म्मवसनो हरः" भा०आनु० १७अ०शिवसहस्रनामोक्तौ। "उत्तरो गोपतिर्गोप्ता" विष्णुस० "गवां पालनात् गोपवेशधारणात् गौर्मही तस्याः पालनाद्वा गोपतिः" भा० "सिंहेन निहतं गोष्ठे गोः सनतृषेव गोपतिम्" कि०४।२२। गोस्वामिनि च हारा०। "ध्रुवा अस्मिन् गोपतौ स्यात् बह्वीः" यजु०१।१ "गोपतौ गवां गन्ताववश्चिन् यजमाने" वेददी०। सूर्य्यस्य किरणपतित्वात् तथात्वम् "मार्त्तण्डो गोपतिः श्रीमान् कृतज्ञश्च प्रतापवान्"। आदित्यहृदयम् "तपसाराध्य वरदं देवं गोपतिमीश्वरम्" भा० शा० १७२ अ० सूर्य्यकन्यातपतीविवाहोक्तौ" ८असुरभेदे "गोपतिस्तालकेतुश्च निहतौ शार्ङ्गधन्वना" हरिवं० १६१ अ०।
तस्य भावः त्व–गोपतित्व पत्यन्तत्वात् यक्। गोपत्य गोपतिभावे न० "येनांशेन हृता गावः कश्यपेन महात्मना। स तेनांशेन जगतीं गत्वा गोपत्यमेष्यति" हरिवं० ५६ अ०।

**गोपथ** पु० अथर्ववेदीयब्राह्मणभेदे।

**गोप(ष्प)पद** न० गोः पदं पदस्थानयोग्यस्थानम्। "गोष्पदं सेवितासेवितप्रमाणेषु पा० उक्तार्थे सुट्षत्वे। गवामसेविते वनादौ। १गोसेविते गोर्गतिगोचरे स्थाने २गोपदमात्रप्रमाणे क्षेत्रे न० तद्भिन्नार्थे न सुट्। ४गोखुरचो।

**गोपदल** पु० गोपदं गोचरणन्यासयोग्यं स्थानं तदाकारं वा लाति ला–क। गुवाकवृक्षे तस्य गोचरणन्यासयोग्यस्थानस्थत्वात् तदाकार मूलकाण्डत्वाद्वा तथात्वम्।

**गोपन** न० गुप–गोपने रक्षणे भावे ल्युट्। १अपह्नवे ज्ञातस्य कर्म्मणोऽप्रकाशने २रक्षणे च "सैन्येन महता युक्तं भरद्वाजस्य गोपने" भा० भी० ५२अ०। "शान्त्या महाधारणे गोपने च" भा० आनु० २६ अ०। चु०गुप–दीप्तौ भावे ल्युट्। ३दीप्तौ। गुप्य–ईर्ष्याकुलत्वयोः भावे ल्युट्। ४ईर्ष्यायाम् ६व्याकुलत्वे च। चु०गुप दीप्तौ भावे युच् गोपना ६दीप्तौ स्त्री।

**गोपनीय** त्रि० गुप–गोपने रक्षणे वा कर्म्मणि अनीयर्। १अप्रकाश्ये २रक्षणीये च। "गोपनीयमिदं दुःखमिति मे निश्चिता मतिः" भा० शान्ति० १४६ अ०। "गोपनीयं प्रयत्नेन न वाच्यं यस्य कस्यचित्" तन्त्रसा०

**गोपव(व)धू** स्त्री ६त० गोपस्य वधूरिव प्रियत्वात्।

१शारिवोषधौ भावप्र० २गोपजातिस्त्रियां "गोपवधूटी दुकूलचौराय" भाग०।"प्रकृतिमगमन् किल यस्य गोपवध्वः" भाग०१।८।२८। अत्र टुकुटः वधूशब्दस्य वध्वं बादित्वमाह स्म वध्नात्यविद्ययेति बन्धधातोरूप्रत्ययेन निष्पन्नत्वादिति । वस्तुतः ऊप्रत्ययस्याकित्त्वात्तलोपाभावप्रसङ्गः । किन्तु "वहोधश्च" उणा० ऊप्रत्यये धश्चान्तादेशेन सिद्धत्वेन अन्त्यस्य धादित्वमेव न्यायः ।

**गोपभद्र** न० गोपे भद्रमिव । १शालूके शब्दर० गोपे भद्रा । २काश्मीरीवृक्षे स्त्री राजनि०। संज्ञायां कन्। ३गम्भारीवृक्षे रत्नमाला शालूकादीनां गोपप्रियत्वात् तथात्वम् ।

**गोपरस** पु० गां जलं पिबति पा—क गोपः रसोऽस्य । बोले शब्दरत्ना० ।

**गोपराष्ट्र** पु० ब०व०गोपप्रधानाः राष्ट्राः शा०त०। भारतवर्षस्थे आभीरप्रधाने जनपदभेदे । "अत ऊर्द्ध्वं जनपदान्निबोध गदतो मम" इत्युपक्रमे "अश्मकाः पांशुराष्ट्राश्च गोपराष्ट्राः करीतयः" भा० भी० ९अ० ।

**गोपरिचर्य्या** स्त्री ६त० । गोसेवायां तत्प्रकारो हेमा०दा० उक्तस्तत्रादौ ब्रह्मपुराणे

"वन्दनीयाश्च पूज्याश्च गावः सेव्यास्तु नित्यशः । तथा । "गवाङ्गोष्ठे स्थितानान्तु यः करोति प्रदक्षिणम् । प्रदक्षिणीकृतं तेन जगत् सदसदात्मकम् ।" विष्णुः "गावः पवित्रा माङ्गल्या गवि लोकाः प्रतिष्ठिताः । गावो वितन्वते यज्ञान् गावः सर्व्वाघसूदनाः । गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना । षडङ्गमेतत्परमं माङ्गल्यं सर्व्वदा गवाम् । शृङ्गोदकं गवां पुण्यं सर्व्वाघविनिसूदनम् । गवां कण्डूयनञ्चैव सर्व्वकल्मषनाशनम् । गवां ग्रासप्रदानेन स्वर्गलोके महीयते ।" पद्मपुराणे "सदा गावः प्रणम्यास्तु मन्त्रेणानेन पार्थिव ! । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च भूयो भूयो नमो नमः । मन्त्रस्य स्मरणादेव गोदानफलमाप्नुयात्" । आदित्यपुराणे "लवणं च यथाशक्त्या गवां ये वै ददयुत । तेषां पुण्यकृतां लोका, गवां लोकं व्रजन्ति ते । योऽप्यं भक्त्या किञ्चिदप्राश्य दद्याद्गोभ्यो नित्यं गोव्रती सत्यवादी । शान्तो बुद्धो गोसहस्रस्य पुण्यं संवत्सरेणाप्नुयाद्धर्म्मशीलः" । देवीपुराणे "गोशालको गवां गोष्ठे यस्तु धूमं न कारयेत् । मक्षिकाक्षीणनरके मक्षिकाभिः स भक्ष्यते । जलवत्पानन्तु गां यस्तु दमित्वा पिबते नरः । बाहिताऽस्याश्चिरं तिष्ठेत् क्षुधार्त्तो वै नराधमः" । महाभारते "गोकुलस्य तृषार्त्तस्य जलान्ते वसुधाधिप ! । उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकम् । कृत्वा गवार्थे शरणं शीत-वात-सहं महत् । आसप्तमन्तारयति कुलं भरतसत्तम !" । ब्रह्मपुराणे "सदोषा गौर्गृहे जाता परिपाल्या सदा स्वयम् । दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रः सुसंयतः । अनाथानां गवां यत्नात्कार्यस्तु शिशिरे मठः । पुण्यार्थं यत्र दीयन्ते तृण-तोये-स्वनानि च" । हारीतः "द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत् । चतुर्थे त्रिस्तनञ्चैव यथान्यायं यथा बलम्" । ब्रह्मपुराणे "आषाढ्यामाश्वयुज्याञ्च पौष्यां माघ्यां च सर्व्वदा । न गृह्णीयाद्गवां क्षीरं सर्व्वं वत्साय निक्षिपेत् । न वाहनं वाहयेच्चैव न गां भारेण पीडयेत् । युगादिषु युगान्तेषु षडशीतिमुखेषु च । दक्षिणोत्तरगे सूर्ये तथा विषुवतोर्द्वयोः । संक्रान्तिषु च सर्व्वासु ग्रहणे चन्द्रसूर्ययोः । पञ्चदश्याञ्चतुर्दश्यां द्वादश्यामष्टमीषु च । उपचारो गवां कार्यो मासि मासि यथाक्रमम् । लवणस्य तु चत्वारि पलान्यष्टौ घृतस्य च । परकीयस्य दुग्धस्य तथा देयानि षोडश । द्वात्रिंशत् शीतलस्यापि जलस्य च पलानि च । आदौ विचार्य पयसः परिमाणं बलं रुचिं । आकस्मिकन्तु दातव्यं पुण्यार्थन्तु गवाह्निकम् । प्रभाते लवणं यत्र दीयते च ततो जलम् । ततस्तृणानि भोज्यञ्च प्रेषणं मांसवर्जितम् । निशि दीपः सतन्त्रीको दिव्या पौराणिकी कथा । एवं कृते मही पूर्णा रत्नैर्द्दत्वा भवेत् फलम् । गोप्रदानात्तु यत्पुण्यं गवां संरक्षणाद्भवेत् । मनुष्यैस्तृणतोयाद्यैर्गावः पाल्याः प्रयत्नतः । देयाः पूज्याश्च पोष्याश्च प्रतिपाल्याश्च सर्व्वदा" । तथा "तृणोदकाद्येषु वनेषु मत्ताः क्रीडन्तु गावः सवृषाः सवत्साः । क्षीरं प्रयच्छन्तु सुखं स्वपन्तु शीतातपव्याधिभयैर्विमुक्ताः । इमं मन्त्रं स शुद्धात्मा जपेन्नित्यं समाहितः । गच्छन् तिष्ठन् जपन् जिघ्रन् भुञ्जन् क्रीडन् समुत्सृजन् । महाभयेषु सर्व्वेषु समेषु विषमेषु च । प्रयाणकाले च तथा श्रोतव्यमभयप्रदम्" । तथा "ग्रासग्रासादिकं देयं निशि दीपः शुभास्वरः । इतिहासपुराणानां व्याख्यानं वीणवादनम्। अन्तस्तुष्टैर्यथाशक्त्या परिचर्या यथाक्रमम् । ताडनाक्रोशखेदाश्च स्वप्नेऽपि न कदाचन । तासां मूत्रपुरीषे तु नोद्वेगः

क्रियते क्वचित् । गोष्ठमीयस्य गोवाटः पुष्पसारादिकैः सदा। ग्रीष्मे हव्याकुलं वेश्म शीते तस्य विवर्द्धनम्। वर्षासु चाथ शिशिरे सुखोष्णं वातवर्जितम् । उच्छिष्टमूत्रविट्श्लेष्मकं अत्याज्यं तत्र च । रजस्वला न प्रवेष्टव्या नान्त्यजातिर्न पुंश्चली । न कण्डूयेद्गवान्तरीं न क्रोशेद्गोष्ठसन्निधौ । न गन्तव्यं गवां मध्ये सोपानत्कैः सपादुकैः । हस्त्यश्वरथयानैश्च सवितानैः कदाचन । दर्पितैर्वा तुरगैः प्रकृष्टैर्गन्तव्यश्च पदातिभिः । गावः क्षुधातुराः पाल्याः श्रद्धया पितृमातृवत् । गिरिप्रपातसिंहव्याघ्रशीतातपभयातुराः । महाकोलाहले घोरे दुर्दिने दैवविप्लवे । गवां तृणानि देयानि शीतलं च तथा जलम्" । विष्णुधर्मोत्तरे "पुष्कर उवाच गवां हि पालनं राम कर्त्तव्यं भृगुनन्दन ! । गावः पवित्रा माङ्गल्या गोषु लोकाः प्रतिष्ठिताः । गावो वितन्वते यज्ञं गावो विश्वस्य मातरः । शकृन्मूत्रं परं तासामलक्ष्मीनाशनं परम् । तद्धि मेध्यं प्रयत्नेन तत्र लक्ष्मीः प्रतिष्ठिता । उद्वेगश्च न गन्तव्यः शकृन्मूत्रे विजानता । गवां मूत्रपुरीषे तु ष्ठीवनाद्यं न संत्यजेत् । गोरजः परमं पुण्यमलक्ष्मीविघ्ननाशनम् । गवां कण्डूयनञ्चैव सर्वकल्मषनाशनम् । गवां शृङ्गोदकं राम ! जाह्नवीजलसन्निभम् । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । पवित्रं परमं ज्ञेयं स्नाने पाने च भार्गव ! । रक्षोघ्नमेतन्माङ्गल्यं कलिदुःस्वप्ननाशनम् । रोचना च तथा धन्या रक्षोगदगरापहा । यस्तु कल्यं समुत्थाय मुखमाज्ये निरीक्षते । तस्याऽलक्ष्मीः क्षयं याति वर्द्धते न च किल्विषम् । गवां ग्रासप्रदानेन पुण्यं सुमहदश्नुते । यावतीः शक्नुयाद्गास्तु सुखं धारयितुं स्वके । धारयेत्तावतीर्नित्यं क्षुधार्त्तास्ता न धारयेत् । दुःखिता धेनवो यत्र वसन्ति द्विजमन्दिरे । नरकं समवाप्नोति नात्र कार्या विचारणा । दत्त्वा परगवे ग्रासं पुण्यं सुमहदश्नुते । शिशिरं सकलं कालं ग्रासं परगवे तथा । दत्त्वा स्वर्गमवाप्नोति संवत्सरशतानि षट् । अधभक्तं नरो दत्त्वा नित्यमेव तथा गवाम् । समाष्टकेन लभते नाकलोकं समावृतम् । ग्रासं प्रातर्मनुष्याणामयनं वेदनिर्मितम् । तथैकमयनं दत्त्वा गवां नित्यमतन्द्रितः । द्वितीयं यः समश्नाति तेन संवत्सरान्तरः । गवां लोकमवाप्नोति यावन्मन्वन्तरं द्विज ! । शीतलार्त्तां गवां त्राता कल्पे पुण्यवतम ! ।

गवां प्रपायां पानीयं दत्त्वा पुण्यवतम ! । वारुणं लोकमाप्नोति क्रीडत्यप्सरसां गणैः । गवां पानप्रवृत्तानां यस्तु विघ्नं समाचरेत् । ब्रह्महत्या कृता तेन घोरा भवति भार्गव ! । परां तृप्तिं समाप्नोति यत्र तत्राभिजायते । गवां प्रचारभूमिन्तु वाहयित्वा कृषादिना । नरकं महदाप्नोति यावदिन्द्राश्चतुर्द्दश । सिंहव्याघ्रभयत्रस्तां पङ्कमग्नां जले गताम् । गामुद्धृत्य नरः स्वर्गे कल्पयोगानुपाश्नुते । गवां लवणदानेन रूपवानभिजायते । सौभाग्यं महदाप्नोति लावण्यञ्च द्विजोत्तम ! । औषधञ्च तथा दत्त्वा विरोगस्त्वभिजायते । औषधं लवणं तोयमाहारञ्च प्रयच्छति । तासाञ्चोद्वहमानाञ्चरन्तीनां मिथो वने । यांस्तत्र सुखं हन्यात् स पापस्तत्र किल्विषी । गोवधेन नरो याति नरकानेकविंशतिम् । तस्मात्सर्वप्रयत्नेन कार्यं तासान्तु पालनम् । विक्रयाच्च गवां राम ! नरकं प्रतिपद्यते । तासान्तु कीर्त्तनादेव नरः पापात् प्रमुच्यते । तासां संस्पर्शनं धन्यं सर्वकल्मषनाशनम् । दानेन च तथा तासां कुल्यान्यपि समुद्धरेत् । उदक्याद्यतिकाशोऽपि नैव तत्र गृहे भवेत् । भूमिदोषस्तथान्योऽपि यत्रैका वसते च गौः । गवां निःश्वासवातेन परा शान्तिर्गृहे भवेत् । नीराजनं तत्परमं सर्वस्थानेषु कीर्त्यते । गवां संस्पर्शनाद्राम ! कल्मषं क्षीयते नृणाम् । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च श्वपाकमपि शोधयेत् । पृथक् च प्रत्ययाभ्यस्तमिति सान्तपनं स्मृतम् । सर्वकामप्रदं राम ! सर्वाशुभविनाशनम् । कृत्यातिकृच्छ्रं पयसा दिवसानेकविंशतिम् । निर्मलात्तेन वीर्येण भवन्ति पुरुषोत्तमाः । त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं घृतं पिबेत् । त्र्यहमुष्णं पयः पीत्वा वायुभक्षः परं त्र्यहम् । तप्तकृच्छ्रमिदं प्रोक्तं सर्वाशुभविनाशनम् । शीतकृच्छ्रं तथैवेह क्रमात्शीतैः प्रकीर्त्तितः । सर्वाशुभविनाशाय निर्मितो ब्रह्मणा स्वयम् । गोमूत्रेणाचरेत् स्नानं वृत्तिं कुर्याच्च गोरसैः । उत्थितास्वुत्थितस्तिष्ठेदुपविष्टासु च स्थितः । अभुक्तवत्सु नाश्नीयादपीतासु च नो पिबेत् । त्राणं चैवात्मना कार्यं भयात्तासु समुद्धरेत् । आत्मानमपि सन्त्यज्य गोव्रतं तत् प्रकीर्त्तितम् । सर्वपापप्रणाशनं मासेनैकेन भार्गव ! । व्रतेनानेन पूर्वेण गोलोकं पुरुषो व्रजेत् । अभीष्टमथवा राम ! यावदिन्द्राश्चतुर्दश । सवा-

आहारनिर्हारवर्जं प्रतिदिनं व्रजान्। मासेन तद्-
वाप्नोति यत्किञ्चिन्मनसेच्छति। गोमतीञ्च तथा विद्यां
सायं प्रातस्तथा जपेत्। गोलोकमाप्नोति नरोनात्र
कार्या विचारणा। उपर्युपरि सर्वेषां गवां लोकः प्रकी-
र्त्तितः। निवसन्ति सदा यत्र गावस्ताः कामगा दिवि।
विमानेषु विचित्रेषु हतेव्यप्सरसाङ्गणैः। किङ्किणी-
जालचित्रेषु वीणासु रचनादिषु। सदा कामफला
नद्यः क्षीरपायसकर्दमाः। शीतलामलपानीयाः सुव-
र्णसिकतास्तथा। पुष्करिण्यः शुभास्तत्र वैदूर्यकमलो-
त्पलाः। मानसी च तथा सिद्धिस्तत्र लोके भृगूत्तम!।
तन्तु लोकं नरा यान्ति गवां भक्त्या न संशयः। गो-
मतीं कीर्त्तयिष्यामि सर्वपापप्रणाशिनीम्। तान्तु मे
गदतो विप्र! शृणुष्व सुसमाहितः। गावः सुरभयो
नित्यं गावो गुग्गुलगन्धिकाः। गावः प्रतिष्ठा भूतानां
गावः स्वस्त्ययनं परम्। अन्नमेव परं गावो देवानां ह-
विरुत्तमम्। पावनं सर्वदेवानां रक्षन्ति च वहन्ति च।
हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि। ऋषीणाम-
ग्निहोत्रेषु गावो होमनियोजिताः। सर्वेषामेव भू-
तानां गावः शरणमुत्तमम्। गावः पवित्रं परमं गावो
मङ्गलमुत्तमम्। गावः स्वर्गस्य सोपानं गावोधन्याः
सनातनाः। नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव
च। नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः।
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्। एकत्र
मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति। देवब्राह्मणगो-
साधुसाध्वीभिः सकलं जगत्। धार्यते वै सदा तस्मात्
सर्वे पूज्यतमा मताः। यत्र तीर्थे सदा गावः पिबन्ति
तृषिता जलम्। उत्तरन्त्यथ वा येन, स्थिता तत्र सर-
स्वती। गवां हि तीर्थे वसतीह गङ्गा पुष्टिस्तथासां
रजसि प्रवृद्धा। लक्ष्मीः करीषे प्रणतौ च धर्मस्तासां
प्रणामं सततञ्च कुर्यात्"। भविष्यपुराणे "ब्रह्मोवाच
गामालभ्य नमस्कृत्य कुर्याद्यस्तु प्रदक्षिणम्। प्रदक्षिणी-
कृता तेन सप्तद्वीपा वसुन्धरा। गवां कण्डूयनेन
दृष्टिपातेन वत्स!। पापं प्रणश्यते यस्मात्तस्मात्ताः
स्पृशेच्च ताः। कुलस्य भवेत्तापं स्वकं यत्र विभूषि-
तम्। सततं वायसस्पर्शाभिरक्षुणैर्गोभिरलङ्कृतम्। या-
वत्तीर्थानि मेदिन्यामासमुद्रं सरांसि च। गवां शृङ्गो-
दकस्नानकलां नार्हन्ति षोडशीम्। गवामस्थि न
लङ्घेत छायां गवां न लङ्घयेत्। यावदाप्नोति तस्मात्।
तावत् पुण्येन युज्यते। गवां कण्डूयनं धन्यं गोप्रदा-
नफलप्रदम्। तुल्यं गोप्रदानस्य भयरोगादिपाल-
नम्। तृणोदकादिसंयुक्तं यः प्रदद्यात्तु गाह्निकम्। कपि-
लाप्रदानस्य फलं विद्यात्र संशयः। पञ्चभूते! शिवे!
पुण्ये! पवित्रे! सूर्यसम्भवे!। प्रतीच्छेदं मया दत्तं
सौरभेयि! नमोऽस्तु ते। बहुना च किमुक्तेन गावः
पाल्याः प्रयत्नतः। गावोदेवास्तथा रक्ष्याः पूज्या पा-
ल्याश्च सर्वशः। गां वै ये ताडयन्तीह सर्वलोकस्य मातरम्।
ते यान्ति रौरवं नाम नरकं नात्र संशयः। ताडये-
द्यस्तु वै मोहात् यो वा कश्चिन्नराधमः। स गच्छेन्न-
रकं घोरं सप्तोढकमिति श्रुतिः। आयान्तीं कृष्ण-
कामां यः सौरभेयीं विभावरीम्। पश्य मातरिति
ब्रूयात् स याति परमं पदम्"। वराहपुराणे 'यम-
उवाच गावः पवित्रं मङ्गल्या देवानामपि देवता।
यस्ताः शुश्रूषते भक्त्या स पापेभ्यः प्रमुच्यते। याव-
ज्जीवं कृतं पापं तत्क्षणादेव नश्यति। गोलाङ्गूलेनो-
द्धृतं तोयं मूर्ध्ना गृह्णाति यो नरः। सरित्सु स्नाप-
जातेभ्यः स पापेभ्यः प्रमुच्यते। प्रभवे यो गवां स्नायात्
रोहिण्यां मानवो भुवि। सर्वपापकृतान् दोषान् दह-
त्याशु न संशयः। धेनोस्तनाद्विनिष्क्रान्तां धारां क्षीरस्य
यो नरः। शिरसा प्रतिगृह्णीयात् पापेभ्यः प्रमु-
च्यते"। आधिकं कृषिखण्डे २२०१।२ पृ० दर्शितं बृहत्-
पराशरवाक्ये द्रष्टव्यम्।

**गोपवन** न० गोपप्रधानं वनं शाक०त०। गोपभूयिष्ठे
वने तत्र भवः विदा० अञ्। गौपवन तत्र भवे त्रि०
"सकल्के षमहालेयमबालेयमकाद्रवेयमशौभ्रेयमवामरथ्यम-
गौपवनम्" कात्या० १०।२।२१ सोऽभिजनोऽस्य विदा०
अञ्। गौपवन पित्रादिक्रमेण तत्र वासिजने तस्य
गोत्रापत्यम् अनृष्यानन्तर्ये विदा० अञ्। तद्गोत्रापत्ये
बहुषु तस्य लुक्। गोपवना गोपवनस्यपुरुषापत्येषु।

**गोपवनादि** बहुत्वे गोत्रप्रत्ययस्य लुगनिमित्ते शब्द-
गणे स च गणः पा० ग० उक्तो यथा।
गोपवन शिग्रु बिन्दु भाजन अश्वावतान श्यामाक श्या-
मक श्यापर्ण विदाद्यन्तर्गणोऽयम्। गोपवन शिग्रु बिन्दु
भोगक भाजन शमिक अश्वावतान श्यामाक श्यामक
श्यावलि श्यापर्ण हरितादिश्च।
हरित किन्दास वह्यस्क अर्कलूष वध्योग विष्णुवृद्ध
प्रतिबोध रथीतर रथन्तर। गविष्ठिर निषाद शबर

चर्मक मठर ब्रह्माङ्क सूपाङ्क सद्रु पुनर्भू पुत्र दुहितृ ननान्दृ परस्त्री परशु च”।

**गोपवल्ली** स्त्री गां पाति पा–क कर्म०। १मूर्वालतायां राजनि०। २शग्रामाललतायां (शग्रामाधास)। शब्दर०।

**गोपस्** त्रि०गुप–असुन् आर्द्धधातुकत्वाद्दाऽऽयाभावः। १गोप्तरि २रक्षितरि। “स जगार भुवनस्य गोपास्तं कापेयं नाभिपश्यन्ति” छा०उ० ‘गोपाः रक्षिता’ भाष्यम्। अस्य गोपायश्ब्दोदाहरणतया कस्यचिदुक्तिः प्रामादिकी। गोपूर्व्व पाधातोरसिद्धगोपाशब्दस्य गोपालनकर्त्तृ्थकत्वेन तत्र भुवनस्येतिकर्म्मयोनन्वयापत्तेः आयपक्षे गोपायस् गोप्तरि त्रि०।

**गोपा** स्त्री गां पाति पा–क टाप्। १शग्रामाललतायाम् शब्दरत्ना०। गां पाति पा–क्विप्। २गोरक्षके च। “गोपा विश्वपावत्” सुश्रु०

**गोपाध्यक्ष** पु० ६त०। गोरक्षकपतौ “गोपाध्यक्षो भयत्रस्तो रथमास्थाय सत्वरः” भा० वि० ३५ अ०।

**गोपानसी** स्त्री० गवां किरणानां पानं शोषणं गोपानं तत् स्यति सो–क गौरा० ङीप्। कुद्येषु छादनार्थं बद्धे १वक्रकाष्ठे (कुदनी) २वल्लनाधारे पटलाधारे वंशपञ्जरे च अमरः। “गोपानसीषु क्षणमास्थितानाम्” माघः। [“गोपायकानां भुवनत्रयस्य” किरा०।

**गोपायक** त्रि० गोपयति गुप–आय+ण्वुल्। रक्षके

**गोपायन** न० गुप–आय–भावे ल्युट्। १गोपने “गोपायनं प्रकुरुते जगतः सार्वलौकिकम्” हरिवं० ४ अ०। कर्त्तरि ल्यु। २रक्षके। “गोपानां बद्धबाहूनां बलैर्गोपायनैर्वृतः” भा० भी० ७अ०।

**गोपायित** त्रि० गुप–आय–कर्म्मणि क्त। १रक्षिते अमरः। भावे क्त। २अतीतगोपने न०।

**गोपाल** पु० गां भूमिं पशुभेदं वा पालयति पालि–अण् उप०स०। १नृपे २गोरक्षके च। “क्षत्रियात् शूद्रकन्यायां समुत्पन्नस्तु यः सुतः। स गोपाल इति ज्ञेयो भोज्योविप्रैर्न संशयः” पराशरोक्ते ३सङ्कीर्णजातिभेदे। “आर्द्धिकः कुलमित्रश्च गोपालोदासनापितौ। एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत्” मनुना तस्य भोज्यान्नतोक्ता। नन्दनन्दने ४विष्णोरवतारभेदे तद्रूपञ्च पद्मपु०पातालख० “त्वामहं द्रष्टुमिच्छामि चक्षुर्भ्यां मधुसूदन!”। ब्राह्मणं प्रति व्यासप्रार्थने भगवदुक्तिं व्यासवाक्ये यथा “पश्याद्य दर्शयिष्यामि स्वरूपं वेदगोपितम्। ततोऽपश्यमहं भूप! बालं बालाम्बुद प्रभम्। गोपकन्यावृतं गोपं हसन्तं गोपबालकैः। कदम्बमूलमासीनं पीतवाससमद्भुतम्। वनं वृन्दावनं नाम नवपल्लवमण्डितम्। कोकिलभ्रमरारावमनोभवमनोहरम्। नदीमपश्यं कालिन्दीमिन्दीवरदलप्रभाम्। गोवर्द्धनं तथाऽपश्यं कृष्णरामकरोद्धृतम्। महेन्द्रदर्पनाशाय गोगोपालसुखावहम्। दृष्टा विष्णुं हृभवं सर्व्वभूषणभूषणम्। गोपालमबलासङ्कुलोदितं वेणुनादिनम्,। तस्य ध्यानमन्त्रयन्त्रादिकं तन्त्रसारे दृश्यम्।

**गोपालक** पु० गां पालयति पालि–ण्वुल् ६त०। १गोरक्षके २भूमिरक्षके च ३शिवे त्रिका०गोपाल+स्वार्थे क। उक्तार्थे ४नन्दनन्दने।

**गोपालकक्ष** स्त्री गोपालप्रधाना कक्षा। भारतवर्षस्थे प्राच्ये देशभेदे “अत ऊर्द्ध्वं जनपदान्निबोध गदतो मम” इत्युपक्रमे “कक्षा गोपालकक्षाश्च जाङ्गलाः कुरुवर्णराः”। भा० भी०९अ०। तस्य राजनि अण्। गौपालकक्षः तन्नृपे बहुत्वे तस्य लुक्। गोपालकक्षास्तन्नृपेषु “ततो गोपालकक्षांश्च सोत्तरानपि कोशलान्। मल्लानामधिपञ्चैव पार्थिवांश्चाजयत् प्रभुः” (भीमः) भा० स०२९अ०। भीमप्राचीविजयोक्तौ।

**गोपालकर्कटी** स्त्री। गोपालस्य गोरक्षकस्य प्रिया कर्कटी। राजनि०। क्षुद्रकर्कट्याम् (राखालशशा)।

**गोपालतापनीय** न० गोपालस्तापनीय सेव्यो यत्र। उपनिषद्भेदे उपनिषच्छब्दे १२२२ पृ० दृश्यम्। गोपालतापनमप्यत्र न०।

**गोपालधानी** त्रि० गोपालोधीयतेऽत्र धा–आधारे ल्युट् ङीप् ६त०। गोष्ठे। तस्य पूलासेन समासे राजद० पूर्वनि० समाहारैकत्वं च गोपालधानीपूलासम्।

**गोपालव** पु० गोपालं तद्धर्मं वाति वा–क उप० स०। गोपतिधर्मयुक्ते आयुधजीविनि राजन्यभेदे। तस्य प्राग्देशत्वे आयुधजीवित्वेऽपि स्वार्थे न ञ्यङ्। “अत्राङ्गयोति किं गोपालवाः” सि० कौ०।

**गोपालि** पु० गां वृषभं पालयति पालि–इन्। “शिवे “गोपालिर्गोपतिर्ग्रामः” भा० आनु० १७ अ० शिवसहस्रनामोक्तौ २प्रवरभेदे प्रवराध्यायः।

**गोपालिका** स्त्री गोपालकस्य पत्नी पालकान्तत्वात् न ङीप् टापि अत इत्वम्। १आभीरपत्न्याम् २शारिवौषधौ च शब्दार्थचि०। गवां रक्षणात्तत्सादृश्यात्तम् ३कीटभेदे हेमच०।

**गोपाली** स्त्री गोपालस्तदाकारोऽस्त्यस्य अच् गौरा॰ ङीष् । १गोपालकर्कट्याम् राजनि॰ । गोपालस्य पत्नी ङीष् । २गोपपत्न्याम् । गां पालयति पालि—अण् ईप् सुगध॰ । ३गोपालयित्र्यां ४कुमारानुचरे मातृभेदे च "अजजाता च गोपाली बृहदम्बालिका तथा" भा॰ श॰ ४७ अ॰ ।

**गोपाष्टमी** स्त्री गोपप्रियाष्टमी । कार्त्तिकस्य शुक्लाष्टम्याम् । "शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाष्टमी बुधैः । तद्दिने वासुदेवोऽभूत् गोपः पूर्वं स वत्सपः । तत्र कुर्य्यात् गवां पूजां गोग्रासं गोप्रदक्षिणम् । गवानुगमनं कार्य्यं सर्वान् कामानभीप्सता" कूर्मपु॰ ।

**गोपिका** स्त्री गोपायति गुप—ण्वुल् । १गोपालयित्र्याम् गोप्येव स्वार्थे क ह्रस्वः । २गोपपत्न्याम् । [ त्रिका॰ ।

**गोपित्त** न॰ गोः पित्तमिव । गोरोचनाख्ये गन्धद्रव्यभेदे

**गोपिन्** स्त्री गोपायति गुप—णिनि । १रक्षितरि स्त्रियां ङीप् सा च २शरामालतायाम् शब्दच॰ । अतिशयेन गोपी इष्ठन् टिलोपः । गोपिष्ठ गोप्तृतमे त्रि॰ । "कामचारस्य वा कामाग्याय गोपिष्ठो गोपायादिति वा" शत॰ ब्रा॰ २।२।१।२ "गोपिष्ठः गोपायितृतमः" भाष्यम् ।

**गोपिल** त्रि॰ गुप—इलच् । गोप्तरि तत्सख्युरर्थ्यां चक् । गौपलेय गुपिलनिर्वृत्तादौ त्रि॰ ।

**गोपी** स्त्री गोपजातिः स्त्री जातौ ङीष् । १गोपजातिस्त्रियाम् । वृन्दावनस्थगोप्यश्च श्रुतिदेवर्षिकन्यारूपा यथा पद्मपु॰ पाता॰ "गोप्यस्तु श्रुतयो ज्ञेयाः ऋषिजा गोपकन्यकाः । देवकन्याश्च राजेन्द्र ! न मानुष्यः कथञ्चन" । तत्र श्रेष्ठा राधाचन्द्रावलीविशाखाललितादयः । मूलम् उज्ज्वलमणौ दृश्यम् । "इत्येवं दर्शयन्त्यस्तास्तं गोप्यो विचेतसः" भाग॰ १०।३।१२ । स्क॰ प्रभा॰ ख॰ तु चन्द्ररूपकृष्णस्य कलारूपता तासामुक्ता यथा । "ततो गोप्यो महादेवि ! आद्यायाः षोडश स्मृताः । तासां नामानि ते वक्ष्ये तानि स्त्रैकमनाः शृणु । लम्बिनी चन्द्रिका कान्ता क्रूरा शान्ता महोदया । भीषणी नन्दनी शोका सुपर्णा विमलाऽक्षया । शुभदा शोभना पुण्या हंसस्मृताः कलाः क्रमात् । हंसएव मतः कृष्णः परमात्मा जनार्द्दनः । तस्यैताः शक्तयो देवि ! षोडशैव प्रकीर्त्तिताः चन्द्ररूपी ततः कृष्णः कलारूपास्तु ताः स्मृताः संपूर्णमण्डला तासां मालिनी षोडशी कला । प्रतिपत्तिथिमारभ्य विहरत्यासु चन्द्रमाः । षोडशैव कला यास्तु गोपीरूपा वरानने ! एकैकशस्ताः संभिन्नाः सहस्रेण पृथक् पृथक्" । गोपायति गुप—अच् गौरा॰ ङीष् । २रक्षिकायां स्त्रियाम् "गीतानि गोप्याः कलमं मृगव्रजः" माघः । स्वार्थे क । गोपिका तत्रार्थे "मञ्जासमालोकयति स्म गोपिका" माघ; ।

**गोपीगीता** स्त्री भाग॰ १०स्क॰ उक्तायां गोपीभिः कृतकृष्णस्तुतौ सा च "जयति तेऽधिकं जन्मना व्रजे" त्याद्येकत्रिंशत्तमाध्यायस्था ।

**गोपीजनवल्लभ** पु॰ गोप्येव जनस्तस्य वल्लभः । श्रीकृष्णे "गोपीजनवल्लभाय स्वाहा" तन्त्रसारे तन्मन्त्रः । गोपीभर्त्रादयोऽप्यत्र "गोपीभर्त्तुर्विरहविधुरा काचिदिन्दीवराक्षी" पदाङ्कदूतम् ।

**गोपीत** पु॰ स्त्री गौर्गोरोचनेव पीतः । खञ्जनभेदे । वृ॰ स॰ ४५ अ॰ "पीतो गोपीत इति कोशकरः खञ्जनोऽदृष्टः" तस्य दर्शने कोशकारितोक्ता ।

**गोपीथ** न॰ पा—भावे थक्—"गोपीथेत्यादि" पा॰नि॰ गोः सोमस्य पीथः । सोमपाने । "प्रति त्वं चारुमध्वरं गोपीथाय प्रहूयसे" ऋ॰१।१९।१ । "गोपीथाय सोमपानाय" भा॰ । गावः पिबन्त्यस्मिन् आधारे थक् । २तीर्थे गोर्जलावतरणे सोपाने तीर्थस्य जलावतरणसोपानत्वात्तथात्वम् । "गोपीथं तीर्थमाख्यातम्" उणादि वृ॰ । गुप—भावे थक् नि॰ । ३रक्षणे पु॰ "गोपीथाय जगत्सृष्टेः काले स्वस्वाच्युतात्मकः" भाग॰ ४।२७।५० । "जगत्सृष्टेर्गोपीथाय रक्षणाय" श्रीधरः । "अजातशत्रुः पृतनां गोपीथाय मधुद्विषः" भाग॰ १।१०।३६ । "गोपीथाय रक्षणाय" श्रीधरः । गोपीथाय हितं यत् । गोपीथ्य तत्र हिते त्रि॰ "अग्निश्च इत्था गोपीथ्याय हि दधाथ तत् पुरूरवो यशोजाः" ऋ॰ १०।९५।११ ।

**गोपुच्छ** पु॰ गोः पुच्छ इव पुच्छो यस्य । १गोलाङ्गूलाख्ये वानरे हेमच॰ "सर्ववानरगोपुच्छा ऋक्षाद्याश्च महाबलाः" (यं सुग्रीवम्) भा॰व॰ २८१ अ॰ । "गोपुच्छैर्हरिभिर्भल्लैर्न-कुलैर्नीभिमर्द्दितम्" (आश्रमम्) भाग॰ २।७।४२ । "गोपुच्छशालावृकमर्कटाश्च" भाग॰ ८।२।१७ । गोपुच्छाकारत्वात् २हारभेदे अमरः । वृत॰ । ३गोलाङ्गूले न॰ । "गोपुच्छस्थे वल्मीकगेऽथ वा दर्शनं भुजङ्गस्य" वृ॰ स॰ ९५ अ॰ । ततः शर्करा॰ स्वार्थे अण् । गोपुच्छ तत्रार्थे त्रि॰ ।

**गोपुटा** स्त्री गोरिव पुटमस्याः । स्थूलैलायाम् राजनि॰ ।

**गोपुटिका** न० गोः वियत्पथस्य पुटिकं पुटयुक्तं मस्तकम् । शिवरूपस्य मस्तके शिका० ।

**गोपुर** न० पुर–अग्रगमने क गवां पुरम्, गवा जलेन पूर्यते पृ–बाहुलकात् क वा । १पुरद्वारे २मुख्यद्वारे अमरः । तत्र गवामग्रगमनात्तथात्वम् । ३कैवर्त्तीमुस्तके मेदि० तस्य जलेन पूरणात्तथात्वम् "गुप्तप्रचयप्रख्यं गोपुरैर्नन्दनोपमैः" भा०आ०२०६०श्लो० । "गोपुराट्टालकोपेतं चतुर्द्वारं दुरासदम्" भा०व० १७३अ० । "पुरगोपुरं प्रति सर्वैन्यसागरम्" माघः । "पौंडा पुरस्यैव च गोपुरस्थे" (भूमि) ह० स० ८६ अ० ।

**गोपुरक** पु० पुर–क इत० गोपुर+स्वार्थे क । १गवां पूरके लिका० २गोपुरशब्दार्थे च गां भूमिं पिपर्त्ति पृ–क संज्ञायां कन् । ३कुन्दुरकवृक्षे राजनि० ।

**गोपुरीष** न० इत० । गोमये राजनि० ।

**गोपेन्द्र** पु० गोप इन्द्र इव । १श्रीकृष्णे हेमच० । "गोपेन्द्रस्यानुजे ज्येष्ठे नन्दगोपकुलोद्भवे" भा० भी० २३अ० । इत० । २गोपेश्वरे नन्दे च गोपेश्वरादयोऽप्यत्र ।

**गोपेश** पु० इत० । १नन्दगोपे "गोपेशं पतितः परे" सुश्च० २श्रीकृष्णे लिका० ।

**गोप्तव्य** त्रि० गुप–कर्मणि तव्य वा आयाभावः । १अप्रकाश्ये २रक्षणीये च "पौरजानपदाश्चैव गोप्तव्यास्ते यथा सुखम्" भा० क० ८५ अ० । इट्पक्षे गोपितव्य आयपक्षे गोपायितव्य तत्रार्थे त्रि० ।

**गोप्तृ** पु० गुप–तृच् । रक्षके । "रक्षः सख्याःसभार्य्याय गोप्तृगुप्ततमेन्द्रियाः" रघुः । "तस्यार्थं सर्वभूतानां गोप्तारं धर्म्ममात्मजम्" । "मुच्यते ब्रह्महत्यायाः गोप्ता गोर्ब्राह्मणस्य च" मनुः २संवरके च । ३विष्णौ पु० "उत्तरो गोपतिर्गोप्ता" विष्णु स० "सकलभूतपालनात् गोप्ता" भा० । "गोहितो गोपतिर्गोप्ता" विष्णुस० । "स्वात्मानं स्वमायया गोपायति संवृणोति गोप्ता" भा० । स्त्रियां ङीप् । "गुह्यातिगुह्यगोप्त्री त्वम्" देवीजपसमापनमन्त्रः । इट्पक्षे गोपितृ आयपक्षे गोपायितृ तत्रार्थे त्रि० स्त्रियां ङीप् ।

**गोप्य** त्रि० गुप–कर्मणि यत् । १रक्षणीये २गोपनीये अप्रकाशनीये च । "आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् । तपोदानापमानं च नव गोप्यानि यत्नतः" काशीख० । ४दासीपुत्रे पु० मेदि० ।

**गोप्यादित्य** पु० प्रभासतीर्थस्थे गोपीस्थापितरविमूर्त्तिभेदे तत्कथा स्का० प्रभा० ख० यथा "ततो गच्छेन्महादेवि ! गोप्यादित्यमनुत्तमम् । भूतेशाद्वायवे भागे धनुर्भिर्द्विशतान्तरे । बलातिबलदैत्यघ्नी दक्षिणाग्नेयसंस्थितम् । धनुषां द्वयके देवि ! संस्थितं पापनाशनम् । तस्योत्पत्तिं प्रवक्ष्यामि महापापहरां शुभाम्" इत्युपक्रमे "अथ तत्र ततान् स्नात्वा प्रासादान् यादवैः पृथक् । ततो गोप्योऽपि ताः सर्वाः सहस्राणि च षोडश । कृष्णमासाद्य भावेन स्थापयाञ्चक्रिरे रविम् क्ष्मापिभिर्नीरदाद्यैस्तु तथा वेदविदादिभिः तत्र प्रतिष्ठापयामासुः प्रतिष्ठाविधिना रविम् । प्रतिष्ठिते ततः सूर्य्ये ददुर्दानानि भूरिशः । ततः क्षेत्र निवासिभ्यस्तीर्थे देशरतेषु वै । ततस्ते ऋषयः सर्वे सन्तुष्टा हृष्टमानसाः । चक्रुर्नाम रवेस्तत्र गोप्यादित्येति विश्रुतम्" ।

**गोप्याधि** पु० कर्म० । आधिभेदे आधिशब्दे ७११ पृ० दृश्यम् । "गोप्याधिभोगे नो वृद्धिः" याज्ञ० ।

**गोप्रकाण्ड** न० प्रशस्तो गौः (जातिः) "प्रशंसावचनैश्च" पा० नित्यस० परनि० । श्रेष्ठे गवि अमरः । नियतलिङ्गत्वात् क्लीवत्वमेव "प्रकाण्डमुद्घतल्लजौ" अमरोक्तेः । मल्लिना० पुंस्त्वोक्तिश्चिन्त्या । यदपि तत्र गोषु मध्ये प्रकाण्ड इत्युक्तं तदपि प्रामादिकं "प्रशंसावचनैश्चेति सूत्रस्य कर्मधारयसमासमात्रविषयत्वात् ।

**गोप्रचार** पु० प्रचरत्यस्मिन् प्र+चर–आधारे घञ् इत० । १गोचारणस्थाने । "ग्रामेच्छया गोप्रचारो भूमिराजवशेन वा" याज्ञ० "गवादीनां चारणाय कियानपि भूभागोऽकृष्टः कल्पनीयः" मिता० । स्कन्दपु० प्रभा० खण्डोक्ते २तीर्थभेदे । "गोप्रचारकथा पुण्या गोपीनां द्वारकागमः" इत्यत्रा० तत्प्रतिपाद्योक्तौ ।

**गोप्रतार** पु० गवां प्रतारः प्रतरणतुल्यः संमर्दोऽत्र । रामस्य वैकुण्ठगमनकाले तदनुगामिनां पुरवासिनां गोप्रतरणतुल्यसम्मर्दयुते सरय्वाः १तीर्थभेदे । "गोप्रतारं ततो गच्छेत् सरय्वास्तीर्थमुत्तमम् । यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः । देहं त्यक्त्वा महाराज ! तस्य तीर्थस्य तेजसा । रामस्य च प्रसादेन व्यवसायाच्च भारत ! । तस्मिंस्तीर्थे नरः स्नात्वा गोप्रतारे नराधिप ! । सर्वपापविशुद्धात्मा स्वर्गलोके महीयते" भा०व०८४अ० । "उरःप्रभृतिषु" पा० कप् । गोप्रतरोऽप्यत्र "यद्गोप्रतरकल्पोऽभूत् संमर्दस्तत्र मज्जताम् । अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे" रघुः । अत्रापि दीर्घमध्यता इत्यन्ये ।

गवा इषभेन प्रतारो गमनमस्य। २शिवे पु०। "गोमर्द्दो गोप्रतारश्च गोवृषेश्वरवाहनः" भा० अनु० १८६अ०। शिवसहस्रनामोक्तौ। कर्म० ६त०। ३गोःप्रतारे पु० अनुपदम् उक्तं रघुवाक्यम् उदा०।

**गोप्रवेश** पु० ६त०। १गोर्वनादितो ब्रजप्रवेशे "गोप्रवेशसमयेऽप्यतोष्मणोर्यान्ति कृष्णपशुरेव या पुरः" कु०स० २५अ०। आधारे ल्युट्। २तत्काले। स च कालः सूर्य्यास्तमयात् प्राक्कालः तथा च वर्णितम् रघौ "सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्। प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः"।

**गोफणा** स्त्री सुश्रुतोक्ते व्रणबन्धनभेदे तत्र कोषदामेत्याद्युपक्रमे "वितानगोफणा पञ्चाङ्गी चेति चतुर्दश बन्धविशेषास्तेषां नामभिराकृतयः प्रायेण व्याख्याताः" सुश्रुतः "चिबुकनासौष्ठांसवस्तिषु गोफणाम्"। (निदध्यात्) सुश्रुत०।

**गोबाल** पु० ६त०। १गोकेशे २तल्लोमनि च स च सीमाज्ञानाय भूमौ निधेयः यथाह मनुः "अश्मनोऽस्थीनि गोबालांस्तुषान् भस्म कपालिकाः। करीषमिष्टकाङ्गार शर्कराः बालुकास्तथा। यानि चैवं प्रकाराणि कालाद्भूमिर्न भक्षयेत्। तानि सर्व्वाणि सीमायामप्रकाशानि कारयेत्"। गोबाल इव बालोऽस्याः "पाककर्णेत्यादि" पा० ङीप्। ओषधिभेदे स्त्री मि० को०।

**गोभण्डीर** पु०स्त्री भट–भाषणे बा० ईरन् गवि जले भण्डीरः। जलकुक्कुभखगे त्रिका०। स्त्रियां जातित्वात् ङीष्। [भस्य चात्मजः" हरिवं० ३२ अ०।

**गोभानु** पु० तुर्वसुवंश्यपपौत्रे "तुर्वसोस्तु सुतो वह्निर्गोभानु-

**गोभिल** पु० छन्दोपग्रन्थकारके ऋषिभेदे।

**गोभृत्** पु० गां भूमिं बिभर्त्ति भृ–क्विप् ६त०। पर्व्वते "माहेन्द्र गोभृच्छिखरेषु मत्ताः स्खलन्ति गोकर्णशरीरभक्षाः" चौरः। तेन निर्वृत्तम् सङ्कला०अञ्। गौभृत पर्व्वतनिर्वृत्ते त्रि० स्त्रियां ङीप्। [अनुगोमत् न।

**गोम** लेपने अद० चुरा० उभ० सक० सेट्। गोमयति ते

**गोमक्षिका** स्त्री गोः क्लेशदायिका मक्षिका। (डाँस) ख्याते मक्षिकाभेदे शब्दर०।

**गोमघ** त्रि० गां मंहति ददाति मंहि–अच् छान्दसि निलोपः कृत्व च ६त०। गोदातरि। "कदा गोमघा हवनानि गच्छाः, ऋ० ६।३५।२ "मंहतेर्दानार्थस्य रूपमुत्तरपदम्" भा० "स गोमघा जरिते" ६।३५।४। "गोमघा गोदात्री" भा० "अश्वामघा गोमघा वा हुवेम" ऋ०७।७१।१।

**गोमण्डल** न० ६त०। १गोसमूहे २भूमण्डले। "मग्नां च तोयापदि दुस्तरायां गोमण्डलस्योद्धरणं चकार" माघः। ३विश्वसंघे च।

**गोमत्** त्रि० गोरस्त्यस्य मतुप्। १गोस्वामिनि २गोयुक्ते च "इन्द्र! गोमन्निहायाहि" यजु०२६।४ "गावः स्तुतिरूपा वाचः किरणा वा विद्यन्तेऽस्य गोमान्" वेददी०। स्त्रियां ङीप्। सा च ३नदीभेदे स्त्री "गोमतीं धूतपापां च गण्डकीञ्च महानदीम्" भा० भी० ६अ०। स्कन्दपु० प्रभा० तन्माहात्म्यम् "गोमत्युत्पत्तिकथनं तस्यां स्नानादिजं फलम्। चक्रतीर्थस्य माहात्म्यं गोमत्युदधिसङ्गमः" इत्यध्या० तत्खण्डप्रतिपाद्ये। अत्र उदधिसङ्गम इत्युक्तेः "गङ्गा सरस्वती पुण्या यमुना च महानदी। गोदावरी गोमती च नदी तापी च नर्म्मदा" इत्युपक्रमे "नद्यः समुद्रसंयोगात् सर्वाः पुण्याः शुभावहाः" प्रभा० खण्डोक्तेश्च सा समुद्रगा अन्या तु गोमती काशीतोऽनतिदूरे उत्तरस्यां गङ्गासङ्गता यथाह" भा० व० ८४ अ० यथा "गोमतीगङ्गयोश्चैव सङ्गमे लोकविश्रुते। अग्निष्टोममवाप्नोति कुलञ्चैव समुद्धरेत्" गोमतीस्नानफलं तत्रैव "रामतीर्थे नरः स्नात्वा गोमत्यां कुरुनन्दन!। अश्वमेधमवाप्नोति पुनाति च कुलं नरः। शतसाहस्रकं तीर्थं तत्रैव भरतर्षभ!। तत्रोपस्पर्शनं कृत्वा नियतो नियताशनः। गोसहस्रफलं पुण्यं प्राप्नोति भरतर्षभ!" गौः गोपदमाधिक्येन विद्यतेऽस्यां विद्यायां मतुप् ङीप्। ५विद्याभेदे सा च गोदानशब्दे २६६८पृ०दर्शिता अन्या तिलधेनुशब्दे वक्ष्यते "गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य च" भा०अनु०७८अ०। "पञ्चगव्येन गोघाती मासेनैकेन शुध्यति। गोमतीं च जपेद्विद्यां गवां गोष्ठे च संवसेत्" शाता०। गोमत्यां भवः नद्या० अण्। गौमत तत्रभवे त्रि० स्त्रियां ङीप्। गोमत्या अदूरभवो देशः अण्। गौमत तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप्। बहुत्वे तस्य वरणा० लुप्। गोमत्यः। उक्तगोमच्छब्दस्य सर्वनामस्थाने नुम् गोमान् गोमन्तावित्यादि रूपम्। गोमानिवाचरति गोमत्+क्विप् गोमतीति ततः क्विप् गोमत्। ४गोस्वामितुल्ये अत्र सर्वनामस्थाने धातुत्वात् न नुम्। गोमत् गोमतौ इत्येव। षष्ठीतत्पुरुषे गोमतीशब्दस्य "ह्वेदिङ्बन्धोर्ह्रदयं विदद्रे" इत्यत्रेव "ङ्यापोः संज्ञाच्छन्दसोः"

**गोसत्र** पु॰ गोभिः कृतं सत्रम्। गवामयनाख्ये सत्रभेदे "गावो वा एतत् सत्रमासत" ता॰ब्रा॰ ४,१,१, गवामयन शब्दे विवृतिः।

**गोसदृक्ष** पुंस्त्री गोः सदृक्षः। गोतुल्ये गवये हेम॰। २जात्यादिना गोतुल्ये त्रि॰। गोसदृशादयोऽपि तदर्थे।

**गोसनि** पु॰ गां सनोति सन–इण् इत॰ पूर्व्वपदात् वा णत्वे प्राप्ते सवना॰ न णत्वम्। गोदातरि गोषणिशब्दे उदा॰ दृश्यम्। "गोसनिं वाचमुदेयम्" अथ॰३।२०।१०।

**गोसम्प्रदाय** त्रि॰ गां सम्प्रददाति सम्+प्र+दा–"आतोऽनुपसर्गे" पा॰ अनुपसर्गत्वोक्तेः न कः किन्तु अण्। गोसम्प्रदातरि।

**गोसम्भवा** स्त्री गोरिव सम्भवो लोमादिरूपाकारो यस्याः। १श्वेतदूर्व्वायां राजनि॰। २गोजाते त्रि॰।

**गोसर्ग** पु॰ गावःसृज्यन्तेऽत्र काले सृज–आधारे घञ्। गवां वनगमनाय मोचन काले सूर्य्यस्य किरणानां त्यागकाले १प्रातःकाले "गोसर्गं चार्द्धरात्रे च तथा मध्यन्दिनेषु च" सुश्रु॰। [ख्याते गोधाख्ये जन्तौ।

**गोसर्प** पुंस्त्री गोरिव चतुश्चरणवत्त्वात् सर्पः। (गोसाप)

**गोसव** पु॰ गौः सूयते हिंस्यतेऽत्र सू–हिंसायाम् आधारे अप् पूर्व्वपदात् वा न णत्वम्। गोसवाख्ये यज्ञभेदे "स्वर्जिता गोसवेन वा" हेमा॰ दा॰ भिक्षुपु॰। तत्कर्त्तव्यता च कात्या॰ श्रौ॰ २२,११,१ सूत्रादौ उक्तं यथा "ऋषभगोसवौ" १सू॰ "ऋषभोगोसवश्च क्रतू भवतः" कर्कः "पूर्वो राज्ञः" २सू॰ "पूर्वः ऋषभसंज्ञको राज्ञः" कर्कः "दक्षिणा ऋषभसहस्रं द्वादशं वा शतम्" ५सू॰ "विकल्पेन ऋषभसंज्ञक ऋषभाणां सहस्रं, द्वादशाधिकं शतं वा" (दक्षिणा) कर्कः। "उक्थ्यो गोसवोऽयुत दक्षिणः" ६सू॰। गोसवसंज्ञः क्रतुरुक्थसंस्थो भवति अयुतदक्षिणश्च" कर्कः। "वैश्यस्य द्व्येके" ७सू॰ मन्यन्ते। "सर्वेषामित्यपरे" ८सू॰। सराजानो विशो यं पुरस्कुर्वीरन् स एतेन यजेत" ९सू॰। "राज्ञा सहिता विशः प्रजाः सर्वे पुरुषा यं पुरस्कुर्वीरन् मुख्यत्वेनाङ्गीकुर्वीरन् स गोसवेन यजेत"। "आस्यविल्वेऽभिषिच्यते" १०सू॰। "प्रतिदुराहवनीयस्य दक्षिणतः" ११सू॰। "स्थितः आगान्तुकत्वाद्न्ते। आहवनीयात् दक्षिणस्यां दिशि उपविष्टो यजमानः प्रतिदुग्धाभिरोष्णेन दुग्धेनाभिषिच्यते "संस्यपतिरिथेनं ब्रूयुः "गोसवयाजिनं प्रजाः" कर्कः। "वैश्यस्तोम दक्षिणालिङ्गो महत्स्तोमेगणयज्ञो भ्रातृणां सखीनां वा" १२सू॰। वैश्यस्तोमदक्षिणायां यानि लिङ्गानि तान्यत्रापि भवन्ति" कर्कः। गां स्वर्गं सुनोति अच् णत्वम् "दातुः स्वर्गदातरि" "तिलोऽसि सोमदैवत्यो गोसवो देवनिर्म्मितः" तिलदानमन्त्रः।

**गोग्रास** पु॰ गवि जले ग्रसति ग्रस–बा॰ असच् ७त॰। बाले रायसुशटः।

**गोसहस्र** न॰ गवां सहस्रं दातव्यतया यत्र। तुलापुरुषादिषोडशमहादानान्तर्गते पञ्चमे महादानभेदे "अथातः संप्रवक्ष्यामि महादानानुकीर्त्तनम्"। "यत्तत् षोडशधा प्रोक्तं वासुदेवेन भूतले" इति चोपक्रम्य "कल्पपादपदानञ्च गोसहस्रं च पञ्चमम्" इत्युक्ता तद्दान प्रकारः हेमा॰ दा॰ मत्स्य पु॰ उक्तो यथा

"मत्स्य उवाच। अथातः संप्रवक्ष्यामि महादानमनुत्तमम्। गोसहस्रप्रदानाख्यं सर्वपापहरं परम्। पुण्यां तिथिमथासाद्य युगमन्वन्तरादिकम्। पयोव्रतस्त्रिरात्रं स्यादेकरात्रमथापि वा। लोकेशावाहनं कुर्य्यात् तुलापुरुषदानवत्। पुण्याहवाचनं कुर्य्याद्धोमः कार्य्यस्तथैव च। ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम्। वृषं लक्षणसंयुक्तं वेदिमध्येऽधिवासयेत्। गोसहस्रादिनिष्क्रम्य गवां दशकमेव"। पयोव्रतस्त्रिरात्रमिति दानदिनात् पूर्वं त्रिरात्रं पयोव्रतः स्यादित्यर्थः, अत्रादिशब्देन देशकाल–वृद्धिश्राद्ध–शिवादिपूजा–ऋत्विग्वरण–मधुपर्कदान–कुण्डवेदिवितान–चक्रलेखनपताकादीनि मत्स्यपुराणोक्ततुलापुरुषदाने विस्तृतानि दृष्टान्ते। वृषं लक्षणसंयुक्तं, वृषलक्षणानि, "उन्नतस्कन्धककुदम् ऋज्वलाङ्गूल कम्बलम्" इत्यादीनि वृषोत्सर्गप्रकरणे मत्स्यपुराणोक्तान्येव वेदितव्यानि, गोसहस्रादिनिष्कृष्येति दशोत्तरगोसहस्रादिति वेदितव्यम्, अपो दशाधिकगोसहस्रस्यनियोगदर्शनात्। यद्यपि गवां दशकमित्यत्र गोमात्रप्रतीतिः तथापि उत्तरत्र "ऋत्विग्भ्यो धेनुरेकैकां दशकादिनिवेदयेदिति" धेनुसंकल्पनात्, पुराणान्तरे "गोसहस्रादिनिष्कृष्य सवत्सं दशकं गवामिति" अन्यत्र धेनुदशकमेवाधिवासनीयम्। इतरत्र पुनर्नैवश्यं धेनुरूपत्वादरः। "गोसहस्रं बहिः कुर्य्याद्वस्त्रमाल्यविभूषितम्। सुवर्णशृङ्गाभरणं रौप्यपादसमन्वितम्। अतः प्रवेश्य दशकं वस्त्रमाल्यैस्तु पूजयेत्। सुवर्ण–घण्टिकायुक्तं ताम्रदोहनिकान्वितम्। सुवर्णतिलकोपेतं हेमपट्टैरलङ्कृतम्। कौशेयवस्त्रसंवीतं माल्यगन्ध-

समन्वितम्। हेमरत्नयुतैः शृङ्गैश्चामरैश्चापि शोभितम्। पादुकोपानच्छत्रभाजनासनसंयुतम्। "दशसौवर्णिके शृङ्गे, खुराः, पञ्चपलास्तथा"। पञ्चाशत्पलमितो दोहनकः अन्यत्र तथाभिधानात् षष्टिकादौ सुवर्णशब्दोऽत्र षोडशमाषपरिमितहिरण्यवचनः, सकृदुच्चरितसुवर्णशब्दावगतपरिमाणपरित्यागानुपपत्तेः। पादुके काष्ठमय्यौ, चर्म्मकृते उपानहाविति भेदः। "गवां दशकमध्ये स्यात् काञ्चनो नन्दिकेश्वरः। कौशेयवस्त्रसंवीतो नानाभरणभूषितः। लवणद्रोणशिखरे-माल्येक्षुफलसंयुतः। कुर्य्यात् पलशतादूर्द्ध्वं सर्व्वमेतदशेषतः। शक्तितः फलसाहस्रितयं यावदेव तु। गोशते वै दशांशेन सर्व्वमेतत् प्रकल्पयेत्"। लवणद्रोणशिखरे, लवणद्रोणोपरीत्यर्थः। नन्दिकेश्वरलक्षणं कलितविजयात् "ऊर्द्ध्वस्थितो द्विभुजः सौम्याख्यो नन्दिकेश्वरः। वामे तु शूलं दक्षे चाक्षमालासमन्वितः" इति ऊर्द्ध्व इति, अशयानानुपविष्ट इत्यर्थः। पलशतादूर्द्ध्वं पलसहस्रत्रितयं यावदिति, साभरणनन्दिकेश्वरविषयमेतत् आनन्तर्य्यात्। गोशते वै दशांशेनेति गोशते देये गामेकामेकञ्च वृषभं वेदिमध्येऽधिवासयेत्। पलशतादूर्द्ध्वं पलशतत्रयं यावदिति साभरणनन्दिकेश्वररचनादिकं कुर्य्यादित्यर्थः। "पुण्यं कालमथासाद्य गीतमङ्गलनिःस्वनैः। सर्व्वौषध्युदकस्नानस्नापितो वेदपुङ्गवैः। इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः"। अत्रापि पूर्व्ववत् पूर्व्वेद्युरधिवासनं विधाय द्वितीयदिवसे ब्राह्मणवाचनानन्तरमग्निकुण्डेषु ऋत्विगुपवेशनादिपूर्णाहुतिपर्य्यन्तं कर्म्मशेषं गुरुः समापयेत्। ततः पुण्यकालम् आत्मानुकूललग्नशुक्लादिलक्षणमासाद्य कुण्डसमीपस्थितकलसोदकेन ब्राह्मणैः स्नापितः शुक्लमाल्याम्बरधरो यजमानो वक्ष्यमाणमन्त्रानुदीरयेत्। "नमो वो विश्वमूर्त्तिभ्यो विश्वमातृभ्य एव च। लोकाधिवासिनीभ्यश्च रोहिणीभ्यो नमो नमः। गवामङ्गेषु तिष्ठन्ति भुवनान्येकविंशतिः। ब्रह्मादयस्तथा देवा रोहिण्यः पान्तु मातरः। गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः। गावः शिरसि मे नित्यं गवां मध्ये वसाम्यहम्। यस्मात् त्वं वृषरूपेण धर्म्म एव सनातनः। अष्टमूर्त्तेरधिष्ठानमतः पाहि सनातनः। इत्यामन्त्र्य च यो दद्याद्गुरवे नन्दिकेश्वरम्। सर्व्वोपकरणोपेतं गोयुगञ्च विचक्षणः। ऋत्विग्भ्यो धेनुमेकैकां दशकादिनिवेदयेत्। गवां च शतमेकैकं तदर्द्धं चाथ विंशतिम्"। दश पञ्चाथवा दद्यादन्येभ्यस्तदनुज्ञया"। दानवाक्यमत्र तुलापुरुषवदूहितव्यम्, एते च शतप्रभृति पञ्चपर्य्यन्ता विकल्पा ऋत्विग्विषयाः तदानन्तर्य्यात्, ततश्चायमर्थः सिद्धो भवति गोदशकमध्यान्नन्दिकेश्वरयुतं गोयुगं गुरवे प्रतिपाद्य शेषाणामष्टानाङ्गवामेकैकामेकैकस्मै ऋत्विजे दद्यात्, तथा गोसहस्रमध्यात् शतद्वयं गुरवे प्रदाय एकैकं शतमृत्विग्भ्यो दद्यात्, अथ वा शतं गुरवे पञ्चाशतं पञ्चाशदृत्विग्भ्यः, अथ वा चत्वारिंशतं गुरवे विंशतिं विंशतिमृत्विग्भ्यः। विंशतिं, वा गुरवे दश दशर्त्विग्भ्यः, दश वा गुरवे पञ्च पञ्चर्त्विग्भ्यो दद्यात् शेषा गास्तदनुज्ञया अन्येभ्योऽपि दद्यात्। दक्षिणाञ्चात्र पूर्व्ववदेव दद्यात् अनुक्तदक्षिणासु सुवर्णं दक्षिणेति वचनात् यथाशक्ति सुवर्णं वा। ततः पूर्व्ववदेव पुण्याहवाचन-देवतापूजन-विसर्जनादि कुर्य्यात्। "नैका बहुभ्यो दातव्या यतो दोषकरी भवेत्। बह्व्यश्चैकस्य दातव्या श्रीमतारोग्यवृद्धये। पयोव्रतः पुनस्तिष्ठेदेकाहं गोसहस्रदः"। इदञ्च पयोव्रतानुष्ठानं, यज्ञाङ्गमेवम् "अयज्ञो नक्तमिष्यते" इति वचनात्। "श्रावयेच्छृणुयाद्वापि महादानानुकीर्त्तनम्। तद्दिनं ब्रह्मचारी स्याद्यदीच्छेद्विपुलां श्रियम्"। आथर्व्वणगोपथब्राह्मणे "अथातो गोसहस्रविधिर्ज्यैष्ठ उदकान्ते शुचौ देशे प्राञ्चमग्निमुपसमाधाय अन्वाधायाथ जुहुयात्, आ गावस्तन्त्रेनाद्यं जुहुयात्, महाव्रीहीणामैन्द्रस्य सौम्यस्य सहस्रं तस्याः पयसि श्रपयित्वा गाव इति, एवमुभय इत्येतेन जुहुयात् पश्चादग्नेस्तीर्थोदकपूर्णकलसमश्वत्थाश्वाह्निसंयोगोऽश्रेणेति दश गाः स्नापयेत् स्वरमापोऽन्याः समभ्युक्ष्य सहस्रं, तस्याः स्नानोदकेनेममिन्द्र वर्द्धय क्षत्रियं म इति, राजानमभिषिञ्चेमा आप इति, षड्भिर्यथोक्तमञ्जनाभ्यञ्जनानुलेपनं कृत्वा सहस्रतमीं प्रथमामलङ्कृत्य गावो मानुपतिष्ठत प्रजावती सूयवसादिति च पर्य्यासयेत् प्रियमग्रमन्त्रत्वा हिःचमन्त्र इति सहस्रतमीमाकाश्य जपेत् मया गावः पतिना सचध्वमिति मन्त्रेणानेनार्घं दत्वा सहस्रतमीं पुनरुपसंस्पृश्य भूमिष्ठा प्रतितिष्ठातीति जपेत् सहस्रं, तस्याः पृष्ठतो व्रजन् गाः प्रदक्षिणीकृत्य नमस्कृत्य स्वस्ति वाच्य ब्राह्मणेभ्यो निवेद्य दश गा दक्षिणाः कर्णे सहस्रतमीं वदन्तु तदपि। सप्तजन्मकृतं पापं पुरुषैः सप्तभिः कृतम्। तत्क्षणात् विधिनानेन नाशयेद्गोप्रदो नरः। सर्व्वेषामिह दानानां फलं अत्र परिकीर्त्तितम्।

तद्वाप्नोति विप्रेभ्यो गोसहस्रप्रदो नरः। अश्वमेधं दशोत्सर्गं गोसहस्रमयन्तु यः। दद्यान्मोक्षाय इत्याहुः पितरस्तर्पयन्ति हि। तस्मादनेन विधिना गोसहस्रन्तु यो नरः। प्रदद्यात् स विशुद्धात्मा याति तत् परमं पदमिति"। मत्स्यपुराणे "अनेन विधिना यस्तु गोसहस्रप्रदो भवेत्। सर्वपापविनिर्मुक्तः सिद्धचारणसेवितः। विमानेनार्कवर्णेन किङ्किणीजालमालिना। सर्वेषां लोकपालानां लोके संपूज्यते सुरैः। प्रतिमन्वन्तरं तिष्ठेद्राजराजो भवेत् पुनः। अश्वमेधशतं कुर्याच्छिवध्यानपरायणः। वैष्णवं लोकमास्थाय ततो मुच्येत बन्धनात्। पितरश्चाभिनन्दन्ति गोसहस्रप्रदं शुभम्। अपि स्यात् स कुलेऽस्माकं पुत्रो दौहित्र एव च। गोसहस्रप्रदो भूत्वा नरकादुद्धरिष्यति। स यस्तत्कर्मकरो वा स्यादपि द्रष्टा तथैव च। संसारसागरादस्मादस्मान् सन्तारयिष्यति। इति पठति य एतद्गो-सहस्रप्रदानं सुरभुवनमुपेयात् स्वरेद्वापि पश्येत्। अनुभवति सुखं वा बाध्यमानो निकामम् प्रहतकलुषदेहः सोऽपि यातीन्द्रलोकम्"।

अन्यपुराणोक्तस्तद्विधिस्तत्रैव दृश्यः। ६त०। २गवां सहस्रे च। गोसहस्रं तद्दानफलं विद्यतेऽत्र अच्। गौरा० ङीष्। ३सोमवारयुतायाम् ४मङ्गलवारयुतायां वा। अमावास्यायाम् स्त्री। जाह्नवीस्नाने तस्यास्तथापुण्यजनकत्वमुक्तं ति० त० व्यासेन "अमायास्यां भवेद्वारो यदि भूमिसुतस्य च। गोसहस्रफलं दद्यात् स्नानमात्रेण जाह्नवी। सिनीवाली कुहूर्वापि यदि सोमदिने भवेत्। गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम्"।

**गोसाद** त्रि० गां सादयति सद–णिच् अण् उप० स०। गोघातके गोसारथौ "गोः सदसादिसारथिषु" पा० पूर्वपदप्रकृतिस्वरः।

**गोसादिन्** त्रि० गां सादयति सद–णिच्–णिनि ६त०। गोसारथौ। गोसादवत् पूर्वपदे प्रकृतिस्वरः।

**गोसारथि** पु० ६त०। गोघातके सारथौ गोसादवत् पूर्वपदे प्रकृतिस्वरः।

**गोस्तन** पु० गोः स्तन इव गुच्छो यस्य। १चतुर्यष्टिकहारे अमरः। ६त०। २गोःस्तने च "करीरपनसास्थि गोस्तनाकाराणि" "तरसं गोस्तनाकारं सर्वभूतगुणोद्भवम्" सुश्रु०।

**गोस्तना(नी)** स्त्री गोः स्तनइव फलमस्याः स्त्रीत्वात् वा ङीष्। १कपिलद्राक्षायाममरः टाबन्तः गोः स्तनाद्भवस्तना अस्याः ङीष्। २कुमारानुचरमातृभेदे। "शृणु मातृगणान् राजन्! कुमारानुचरानिमान्" इत्युपक्रमे" प्रभावती विशालाक्षी पालिता गोस्तनी तथा" भा० श० ४७अ०।

**गोस्तोम** पु० गोनामकः स्तोमः पूर्व्वपदात् षा षत्वाभावः। एकाहसाध्ये अग्निष्टोमाङ्गे यज्ञभेदे। "गोस्तोमभूमिस्तोमवतस्तानिसयामास्" आश्व० श्रौ० ८।५।२। "गोस्तोमो भूमिस्तोमोवनस्पतिसव इति त्रयः एकाहाः कर्त्तव्याः" नारा० इ०। गोष्टोमशब्दे विवृतिः।

**गोस्थान** न० ६त०। गोष्ठे अमरः "मध्ये गोस्थानसङ्कुलम्" हरिवं० ६१अ०। स्वार्थे क। तत्रार्थे।

**गोस्वामिन्** ६त०। गवां स्वामिनि। "तावत् भूयो वा गोस्वामिने दत्त्वा" कात्या० श्रौ०। १५।६।१२। "गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः" मनुः। "प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम्" पराशरः। गवामिन्द्रियाणां स्वामी। २जितेन्द्रिये यतीनामुपाधिभेदे। वोपदेवगोस्वामी रूपगोस्वामी।

**गोह** पु० गुह्यतेऽत्र गुह–घञ् बा० ऊत्वाभावः। गेहे "अद्रिमौशिजस्य गोहे" ऋ० ४,२१,६। 'गुहा यदीमौशिजस्य गोहे" ७ "विदद् गौरस्य गवयस्य गोहे" ८ "गोहे गृहे" भाष्यम्। तस्यादूरभवोदेशः सुवास्वा० अण्। गौह गेहादूरभवे त्रि० स्त्रियां ङीप्।

**गोहत्या** स्त्री ६त०। गोहनने। प्राणवियोगफलकव्यापारो हननम् यथाह वह्निपु० "स्यात् प्राणवियोगफलकव्यापारो हननं स्मृतम्। रागात् द्वेषात् प्रमादाद्वा स्वतः परत एव वा"। हत्याया ज्ञानाज्ञानकृतत्वं च प्रा० त० व्यवहृपि यथा

"अथ ज्ञानकृतादिनिरूपणम्। तत्र गोवधस्य बुद्धिपूर्वकत्वं तदा भवति, यदि गां ज्ञात्वा एतां हन्मीति इच्छया हन्ति, तदा कामनाद्वारैव ज्ञानस्य प्रवृत्त्यङ्गत्वात्, तदभावे त्वबुद्धिपूर्वकत्वम्। अतएव प्रवृत्त्यङ्गज्ञानस्य कामनाव्यभिचाराभावादेव 'कृच्छ्रांस्तु चतुरः कुर्य्यात् गोवधे बुद्धिपूर्वके। अमत्या च द्वयं कार्य्यम्, इति विज्ञानेश्वरवचने ज्ञानाज्ञानाभ्यां द्वैविध्यमुक्तम् अन्यत्र कामाकामाभ्यामित्युक्तम् यथा बृहस्पतिः "कामाकामकृतं त्वेवं महापापं द्विधा मतम्। पुरुषापेक्षया चैव निष्कृतिर्द्विविधा स्मृता"। इत्यत्र गवयादिभ्रमेण लोगोवधस्तत्र वधस्य न ज्ञानकृतत्वं गोत्वेनाज्ञानात्। गोत्वेन गां जानतोऽप्यस्योद्देश्यप्रमादाद्यादिना यदि हन्ति

तदापि न ज्ञानकृतत्वं तद्विषयकहननेच्छारूपद्वाराभावात्"। तत्र साक्षात् परम्पराकृतव्यापारभेदः मिता० उक्तो यथा "साक्षात्कर्त्तृनिमित्तिनोश्च भेदस्तेनैव दर्शितः 'पाषाणैर्लगुडैर्वापि शस्त्रेणान्येन वा बलात्। निपातयन्ति ये गास्तु कृत्स्नं कुर्य्युर्व्रतं हि ते। तथैव बाहुजङ्घांसपार्श्वग्रीवादिमोटनैरिति'। एतदुक्तम्भवति। पाषाणलगुडादिभिर्ग्रीवादिमोटनादिना वा ये गां निपातयन्ति। ते साक्षात्कर्त्तारस्तैरेव कृत्स्नं प्रायश्चित्तम्। ये तु व्यवहित रोधबन्धादिव्यापारयोगिनस्ते निमित्तिनस्तेषां न कृत्स्नव्रतसम्बन्धः किन्तु तदध्यायैरेव पादद्विपादादिभिरिति तथा रोधबन्धादीनां व्यवहितव्यापारत्वाविशेषेऽपि वचनात् क्वचित्पादः क्वचिद्द्विपादः पादोनं क्वचिदिति" युक्तम्।

तस्याः शोधकं प्रायश्चित्तं स्वामिभेदाद्भिन्नं प्रा०त० उक्तं यथा तत्र ब्राह्मणस्वामिकस्य गोर्बधे मानवं प्रायश्चित्तं तत्र गोघ्नस्य दक्षिणं तत्र चतुर्दश धेनवः तन्मूल्यं वा। क्षत्रियस्वामिकस्य गोर्बधे देवलोक्तं तत्र तत्रैवोक्तं यथा "गोघ्नः पञ्चमासान् तच्चर्म्मणा परिहृतो गोग्रासाहारो गोव्रती यवाशी गोभिरभिसञ्चरन् विमुच्यते"। गोग्रासाहारो गोग्रासाहारी "कर्म्मण्यण्" इति साधुः। पञ्चमासव्यापकभक्षणं द्वादशप्राजापत्यतुल्यं दक्षिणा च विशेषानुपदेशात् यथाशक्ति देयेति। एतज्ज्ञानादज्ञानात्तदर्द्धं स्त्रीशूद्रबालवृद्धानामर्द्धम् एकस्योभयपरत्वे पादः। वैश्यशूद्रस्वामिनो गोर्बधे तु शातातपः "पञ्चगव्येन गोघाती मासेकेन विशुध्यति। गोमतीञ्च जपेद्विद्वान् गवां गोष्ठे च संवसन्"। पञ्चगव्यमाह शातातपः "गोमक्रत् द्विगुणं, मूत्रं सर्पिर्दद्याच्चतुर्गुणम्। क्षीरमष्टगुणञ्चैव पञ्चगव्ये तथा दधि", तथाऽष्टगुणम्। यतः "आहृत्य प्रणवेनैव उद्धाप्य प्रणवेन च। प्रणवेन समालोड्य प्रणवेनैव तत्पिबेत्"। उद्धाप्य मिश्रीकृत्य। "मन्त्राज्ञाने मिताक्षरायां षट्त्रिंशन्मतम् 'जपहोमादि यत्किञ्चित् कृच्छ्रोक्तं सम्भवेन्न चेत्। सर्वं व्याहृतिभिः कुर्य्यात् गायत्र्या प्रणवेन च"। गवां गोष्ठ इति स्वपाकबालवत् मातृकाद्विकगोसम्यावबोधाय। गोमती जपसहितम् सपञ्चगव्यपानं प्राजापत्यपञ्चकतुल्यम्। एतदज्ञानकृते ज्ञानकृते तु द्वैगुण्यम्। स्त्रीशूद्रबालवृद्धानामर्द्धम् एकस्योभयधर्म्मपरत्वे पादः।

शूद्रसम्बन्धिनो गोर्बधे तु विष्णुमित्रः "कृच्छ्रांस्तु चतुरः कुर्य्यात् गोबधे बुद्धिपूर्वके। अमत्या च द्वयं कार्य्यं तदर्द्धं बालवृद्धयोः। स्त्रीशूद्रयोरेवमेतद्बधे चैव न संशयः"। कृच्छ्रान् प्राजापत्यानि। तच्चतुष्टयाशक्तौ चतस्रो धेनवः द्वादश कार्षापणा वा। एतज्ज्ञानकृते अज्ञाने तदर्द्धं स्त्रीशूद्रबालवृद्धानामर्द्धम्। एकस्योभयधर्म्मपरत्वे पादः। प्रा०त०रघु०। स्वामिकृतविशेषस्तु प्रायश्चित्तविवेकानुसारादुक्तः।

गर्भिण्यादौ तु विशेषमाह वृहस्पतिः "गर्भिणीं कपिलां दोग्ध्रीं होमधेनुञ्च सुव्रताम्। रोधादिना घातयित्वा द्विगुणं गोव्रतञ्चरेत्"। गर्भिणीबधे तु विशेषमाह वृद्धयमः "गवां निपतने चैव गर्भनाशो यदा भवेत्। एकैकश्च चरेत् कृच्छ्रं यथापूर्वं तथा परम्"। कृच्छ्रपदं व्रतपरम् द्विगुणं गोव्रतमित्येकवाक्यत्वात् "पादमुत्पन्नमात्रे तु द्वौ पादौ गात्रसम्भवे। पादोनं व्रतमादिष्टं हत्वा गर्भमचेतनम्। अङ्गप्रत्यङ्गसम्पन्ने गर्भे चेतःसमन्विते। द्विगुणं गोव्रतं कुर्य्यात् प्रायश्चित्तं विशुद्धये"। मध्यमवचनं भवदेवेन व्याख्यातम् यथा "यदि लगुडाद्यभिघातेन गौर्भ्रंशति गर्भमात्रपातो भवति तदोत्पन्नगर्भमात्रपाते यथोक्तप्रायश्चित्तपादाचरणम्। गात्रावयवोत्पत्तौ प्रायश्चित्तपादद्वयं सकलगात्रसम्पत्तौ चैतन्याभावे प्रायश्चित्तपादत्रयम्। सर्वाङ्गैश्चैतन्ययुक्तगर्भघाते द्विगुणमेव प्रायश्चित्तमूहनीयम्"। मिताक्षरायान्तु गर्भिणीबधे यदा गर्भोऽपि निहतो भवति तदा प्रतिनिमित्तं नैमित्तिकमावर्त्तत इति न्यायादविशेषेण द्विगुणव्रतप्राप्तौ षट्त्रिंशन्मते विशेषोक्तः 'पादमुत्पन्नमात्रे तु द्वौ पादौ दृढतां गते। पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम्। अङ्गप्रत्यङ्गसम्पन्ने गर्भे चेतःसमन्विते। द्विगुणं गोव्रतं कुर्य्यादेषा गोघ्नस्य निष्कृतिः"। दोग्ध्रीं बहुक्षीराम्। वृहस्पतिः "अतिवृद्धामतिकृशामतिबालाञ्च रोगिणीम्। हत्वा पूर्वविधानेन चरेदर्द्धं व्रतं द्विजः"। पूर्वविधानेन मन्वाद्युक्तत्रैमासिकादिना अतिवृद्धा स्तन्यच्छेदनासमर्था अतिकृशा कृशत्वेन दोहनवाहनायोग्या अतिबाला वर्षपर्य्यन्तं बाला तदतिक्रान्ता द्विवर्षीया। तथा च वृहदङ्गिराः 'वर्षमात्रा तु बाला स्यादतिबाला द्विमासिकी। अतःपरन्तु सा गौः स्यात्तरुणी दन्तजन्मनि"। अतएव वक्ष्यते 'द्विपादस्तु द्विहायने' इति संवर्त्तः। 'व्यापन्नानां बहूनाञ्च बन्धने रोधनेऽपि वा। भिषङ्मिथ्योपचारे च द्विगुणं गोव्रतञ्चरेत्। एकप्रयत्ने निष्पन्ने बहूनां गवां बधे प्रायश्चित्तगौरवयुक्तं न तु तत्कृता पापभेदाभावात्

तेऽपि मोच्याः । अर्थात्तत्र पालो दण्डनीयः । दैवराजपरिप्लुताः गजादिद्रावणात् सेनादिदर्शनाद्वा पलायिताः पशवो यदि क्षेत्रे चरन्ति तदा न दोष इत्यर्थः ।

पालकान्तरसत्त्वे तु मनुः “दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे । योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात्” । “दिवा पशूनां पालकहस्तन्यस्तानां योगक्षेमविषये दोषे जाते पालकस्य गर्हणीयता रात्रौ पुनः पालप्रत्यर्पितानां स्वामिनां दोषः । अन्यथा यदि रात्रावपि पालकहस्तगता भवन्ति तदा दोषे उत्पन्ने पाल एव गर्हणीयतां प्राप्नोति” इति कुल्लूकभट्टः । स्मृतिसागरे वृहदङ्गिराः “अनागतस्य चानेता व्यागतस्य च रक्षकः । रात्रावपि यदान्योऽस्ति तदा स्वामी न दोषभाक्” । ननु दण्डप्रकरणोक्तमनुवचनं प्रायश्चित्ते कथमिति चेन्न । “दण्डवत् प्रायश्चित्तानि भवन्तीति” श्रुतेः तथा व्यवहाराच्च । एवञ्च “यत्रापवर्त्तते युग्यं वैगुण्यं प्राजकस्य च । तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमः” इति मनुवचने “यत्र सारथेरकौशलात् यानमन्यथा गच्छति तत्र हिंसायामसुशिक्षितसारथिनियोगात् स्वामी द्विशतं दण्डं दाप्यः स्यादिति” कुल्लूकभट्टव्याख्यानदर्शनात् अयोग्यपालकसमर्पणे स्वामिनो दोषात्तस्यैव प्रायश्चित्तमुक्तम् । ‘यावत् शस्यं विनश्येत्तु क्षेत्री तावत् फलं लभेत् । पालस्ताड्योऽथ गोस्वामी पूर्व्वोक्तं दण्डमर्हति” याज्ञवल्क्यवचने गवादिदोषेण यावत् शस्यं विनश्यति तावदेव पालकात् प्राप्तव्यं पालकाशक्तौ पालकस्ताड्यः स्वामी पूर्व्वोक्तं दण्डादिमर्हतीति दर्शनाच्च । गोवधप्रायश्चित्ते पालकव्याहमात्रे स्वामिना द्रव्यं दत्त्वा प्रायश्चित्तं कारयितव्यं कर्त्तव्यं वा । स्वस्वपालके स्वयं कर्त्तव्यम् । सशिखवपनमित्यत्र नैमित्तिकेन सशिखवपनेन “सदा बद्धशिखेन तु” इत्यस्य “गायत्र्या तु शिखां बद्ध्वा नैर्ऋत्यां ब्रह्मरन्ध्रतः । जूटिकाञ्च ततो बद्ध्वा ततः कर्म समाचरेत्” इति ब्रह्मपुराणोक्तस्य च नित्यस्य बाधेन दोषाय फलचमसेन सोमस्य बाधवत् गोदोहेन चमसस्य बाधवच्च । “सशिखं वपनं कार्य्यमास्नानात् ब्रह्मचारिणा । इति कात्यायनकृतछन्दोगपरिशिष्टेऽप्येवम् । एतदेकश्रुतिमूलकत्वात् तद्वृत्तपारस्करीये पर्युप्तशिरस्कमिति सूत्रेऽपि तथैवार्थः तद्व्याख्याता हरिशर्म्मणापि परिवर्त्ततोभावेनोप्तशिरस्कं मुण्डितशिरस्कमिति व्याख्यातम् । न च “एते लूनशिखास्तस्य दशनैरसिरोङ्कितैः । कुशाः काशा विराजन्ते वटवः सामगा इव” इति विष्णुपुराणीये सामगा इति विशेषणात्तदन्येषां लूनशिखत्वमिति वाच्यं प्रागुक्तवचनात् सर्व्वेषां सशिखवपनप्राप्तेः विध्यन्तरकल्पनापत्तेश्च । तृणसागरयोरौपम्यन्तु हरिणसुखहेतुत्वेनाप्युक्तं तयोः सुखहेतुत्वञ्च भक्ष्यत्वेन गाध्यत्वेनेति शेषः । एवं प्राचीनावीतीत्यादिना “सदोपवीतिना भाव्यम्” इत्यस्यापि बाध इति प्रसङ्गादुक्तम् । ब्राह्मणस्य विशेषेणेति ब्राह्मणस्य गवानुगमनं मुख्यम् । एतेनापालनकृतगोवधे प्राजापत्यं करणीयमिति चलोतिकर्त्तव्यतापि प्रजापत्यतुल्येति पण्डितसर्व्वस्वे हलायुधः । वृषभो गौश्च दक्षिणा । ब्राह्मणभोजनं विशेषयति यज्ञपार्श्वः “गर्भाधानादिकृत्येषु ब्राह्मणान् भोजयेद्दश” । प्राजापत्यद्वयाशक्तौ धेनुद्वयं तदशक्तौ षट् कार्षापणाः । एवञ्च वृषमूल्यं पञ्च कार्षापणाः गोमूल्यमेकः कार्षापणः । शूलपाणिप्रभृतिभिस्तु इतिकर्त्तव्यतायां विशेषो नादृतः । एतच्च शूद्रस्वामिकेतरवधविषयम् शूद्रस्वामिकस्याज्ञानात् साक्षाद्वधे यत्किञ्चिद्दक्षिणककृच्छ्रद्वयस्य निबन्धृभिर्व्यवस्थापितत्वेनापालनकृतवधे तदधिकस्यायुक्तत्वात् वरं तत्तुल्यं कृच्छ्रद्वयं युक्तमुत्पश्यामः । अतएव एतद्विषय एव स्मृतिसागरसारे वृहदङ्गिराः ‘अरक्षिते तु कूपादौ हते व्याघ्रादिभक्षिते । व्रतार्द्धमाचरेत् स्वामी रक्षिते नास्ति दूषणम्’ । व्रतार्द्धं कामकृतव्रतार्द्धं नास्ति दूषणमिति यदि प्रमत्ता गौर्निवारयन्तं पालमतिक्रम्य गर्त्तकान्तारादौ म्रियते तदा नेत्यर्थः । अन्यत्र सत्येव पालके सम्यक्पालनाभावेन श्वभ्रादौ पाताद्गोमरणे प्रायश्चित्तमाह विष्णुः ‘पल्वलौघहकव्याघ्रश्वापदादिनिपातने । श्वभ्रोद्बन्धनसर्पाद्यैर्म्मृते पादोनमाचरेत् । अपालने तु कृच्छ्रं स्यात् शून्यागाराद्युपप्लवे” । पादोनं प्राजापत्यमेव उत्तरवचने कृच्छ्रश्रवणात् । तथा “पादश्चाप्राप्तके देयो वत्से स्वामिन्यरक्षिते” । अप्राप्तके अप्राप्तदन्तावस्थे त्रिहायणपर्य्यन्ते इति यावत् । एवम्भूते वत्से अरक्षिते श्वभ्रपातादिना मृते सति स्वामिना प्राजापत्यपादः करणीयः । अत्र पादमात्रप्रायश्चित्तत्वात् बालत्वादिना नाल्पत्वम् । तत्राप्राप्तदन्तावस्थवत्सापालननिमित्तकवधजन्यपापक्षयकाम इति प्रयोगः”

आतिदेशिकी गोहत्या बहुविधा यथा “सावित्र्युवाच । विप्रहत्याञ्च गोहत्यां विंशिधातिदेशिकीम् । क

वा ब्रह्मामगस्था वा को वा सन्ध्याविहीनकः। एतेषां मानवं सर्वं वद वेदविदांवर!। यम उवाच, गामाहारं प्रकुर्वन्तं पिबन्तं यो निवारयेत्। याति गोविप्रयोर्मध्ये गोहत्यां च लभेत् स। दण्डैर्गांताडयन् मूढो यो विप्रो वृषवाहकः। दिने दिने गवां हत्यां लभते नात्र संशयः। ददाति गोभ्य उच्छिष्टं भोजयेद्वृषवाहकम्। भोजयेद्वृषवाहान्नं स गोहत्यां लभेद्ध्रुवम्। वृषलीपतिं याजयेद्योभुङ्क्तेऽन्नं तस्य यो नरः। गोहत्याशतकं सोऽपि लभते नात्र संशयः। पादं ददाति वह्नौ यो गाश्च पादेन ताडयेत्। गृहं विशेदधौताङ्घ्रिः स्नात्वा गोवधमालभेत्। यो भुङ्क्ते स्निग्धपादेन शेते स्निग्धाङ्घ्रिरेव च। सूर्योदये च द्विर्भोजी स गोहत्यां लभेत् ध्रुवम्। अवीरान्नञ्च योभुङ्क्ते योनिजीवी च ब्राह्मणः। यस्त्रिसन्ध्याविहीनश्च स गोहत्यां लभेद्ध्रुवम्। पितृंश्च पर्वकाले च तिथिकाले च देवताः। न सेवतेऽतिथिं योहि स गोहत्यां लभेद्ध्रुवम्। स्वभर्त्तरि च कृष्णे वा भेदबुद्धिं करोति या। कटूक्त्या ताडयेत् कान्तं सा गोहत्यां लभेद्ध्रुवम्। गोमार्गखननं कृत्वा ददाति शस्यमेव च। तडागे च तदूर्द्ध्वं या स गोहत्यां लभेद् ध्रुवम्। प्रायश्चित्तं गोवधस्य यः करोति व्यतिक्रमः। अर्थलोभादथाज्ञानं स गोहत्यां लभेद्ध्रुवम्। राजके दैवके यत्नात् गोस्वामी गां न पालयेत्। दुःखं ददाति यो मूढो गोहत्यां लभते ध्रुवम्। प्राणिनं लङ्घयेत् यो हि देवार्च्चामनलं जलम्। नैवेद्यं पुष्पमन्नञ्च स गोहत्यां लभेद् ध्रुवम्। शश्वन्नास्तीति यो वादी मिथ्यावादी प्रतारकः। देवद्वेषी गुरुद्वेषी स गोहत्यां लभेद्ध्रुवम्। देवताप्रतिमां दृष्ट्वा गुरुं वा ब्राह्मणं सति!। न सम्भ्रमान्नमेत् यो हि स गोहत्यां लभेद्ध्रुवम्। न ददात्याशिषं कोपात् प्रणताय च यो द्विजः। विद्यार्थिने च विद्याञ्च स गोहत्यां लभेद्ध्रुवम्" ब्रह्म वैव० पु० प्रकृतिख०, २७अ०। "सुव्यामोपकरो-विप्रो गोवधस्य व्रतं चरेत्" प्रा० त० उक्तेः सुव्यामोपोऽपि वादेशिकः गोवधः।

**गोहन्** त्रि० गां हन्ति हन–क्विप् ह्रस्व०। १गोहन्तरि मेषस्य जनभेदके २रुद्रे पु०। "आ रे गोहा नृहा वधोयः" ऋ० ७।५६।१७। "गोहा गवां मेषस्यसखानां भेदकः" भा०।

**गोहन** त्रि० गुहू–संवरणे ल्यु जत्वाभावःच्छान्दसः। संवरके "समाने अहन् त्रिरवद्य गोहनाः" ऋ० १।३४।१ "गुह संवरणे नन्द्यादित्वात् ल्युः "अदुपधायाः गोहः" पा० प्राप्तस्य जत्वस्याभावश्छान्दसः" भा०।

**गोहमुख** पु० भारतवर्षस्थे पर्वतभेदे। भागवतोक्तगोकामुख पर्वतस्य विष्णु पु० गोहमुखेति नाम। गोकामुखशब्दे दृश्यम्।

**गोहरितकी** स्त्री गोः हरितकीव हितकारित्वात्। विल्वमूले हेमच०। [हले त्रिका०।

**गोहल** न० हल–विलेखे क्विप् तं लाति ला–क गोर्हलः। गोमये हारा०।

**गोहालिया** स्त्री गवां हाले विलेखे आलु बा० च। (गोयालिया) ख्याते लताभेदे "पीतं गोयालियामूलं तिलदध्याज्यसंयुतम्। निवद्धमूत्रं कथितं प्रवर्त्तयति शङ्कर!" इति गारुड़े १९०अ०।

**गोहित** पु० गवां हितं यस्मात् ५ब०। १विल्वे, २घोषालतायाञ्च। ३गोहितकारके त्रि०। ४विष्णौ पु० "गोहितो गोपतिर्गोप्ता" विष्णुस०। "गोभ्यो हितो गोहितः, गोर्भूमेर्भारावतारणेच्छया शरीरग्रहणं कुर्वन् गोहितोवा" भाष्यम्। [मूले हेमच०।

**गोहिर** न० गुह–बा० इरच् पृषो० जत्वाभावः। पाद-

**गोह्य** त्रि० गुह–वा ण्यत् अच्चोव जत्वस्य नियमनात् नोत्वम्। १गुह्ये २अप्रकाश्ये ३संवरणीये च।

**गौकक्ष्य** पुंस्त्री गोकक्षर्षेर्गोत्रापत्यं गर्गा० यञ्। गोकक्षर्षिगोत्रापत्ये। तस्य छात्रः कण्वा० अण् यलोपः।

**गौकक्ष** तच्छात्रे गौकक्ष्यस्यापत्यं तिका० फिञ्।

**गौकक्ष्यायनि** तदपत्ये पुंस्त्री। स्त्रियां क्रौड्यादि० ष्यञ्। गौकक्ष्या गोकक्षगोत्रस्त्रियाम्। बहुत्वे "यञञोश्च" पा० यञो लुक्। गोकक्षास्तद्गोत्रापत्येषु।

**गौग्गुलव** त्रि० गुग्गुलौ भवः अण्। गुग्गुलुभवे धूपादौ स्त्रियां शार्ङ्गरवा० ङीन्।

**गौच्य** पु० गोच्याः हिमालयपत्न्याः अपत्यम् ढक् प्राप्ते बा० यत्। हिमालयपुत्रे मैनाके शब्दार्थचि०।

**गौञ्जिक** पु० गुञ्जा तुलामानभेदः तद्ग्रहणं शीलमस्य ठक्। स्वर्णकारे त्रिका०।

**गौड़** पु० "वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे!। गौड़देशः समाख्यातः सर्वविद्याविशारदः" स्कन्दपु० उक्ते १देशे २तद्देशस्थे जने श०र०। "सारस्वताः कान्यकुब्जा गौड़मैथिलकोत्कलाः। पञ्च गौड़ा इति ख्याताविन्ध्यस्योत्तरवासिनः" स्कन्दपु० इत्युक्तेषु विप्रप-

र्व्वतोत्तरभागवासिषु २ब्राह्मणभेदेषु च। स्वार्थे क तत्रार्थे। "अथ पूर्व्वस्याम्" इत्युपक्रमे "उदयगिरि भद्रगौडकपौण्ड्रोत्कलकाशिमेकलाम्बष्ठाः" वृ०सं०१४अ० कूर्म्मविभागे पूर्व्वस्यदेशोक्तौ। "अस्ति गौडविषये कौशाम्बी नाम नगरी" हितो०। "गौडोराष्ट्रमनुत्तमं निरुपमा तत्रापि राढा पुरी" प्रबोधच० "सर्व्वे सिंहगुहावर्य्यः कलिङ्ग गौडराजैः" सुश्रु० चि०। गुडस्य विकारः अण्। ४गुडविकारे खण्डखसरादौ त्रि० "गुडस्य द्वादशाम्रस्य पीत्वा गौडं सुरासवम्" भा० व० ४४अ०। "नानाद्रव्यादरसानाञ्च खाद्यखानां तथैव च। भोजनानि सुपर्णानि गौडानि च सहस्रशः" रामा० बा० ५२ स०। "गौडमद्यमनम्लं वा पानकं गुरु मूत्रलम्" सुश्रुतः। ५मदिराभेदे स्त्री "गौडी पैष्टी तथा माध्वी विज्ञेया त्रिविधा सुरा। यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैः" मनुः। "गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत्। तप्तकृच्छ्रं पराकं च चान्द्रायणमनुक्रमात्" वृहस्पतिः। ६काव्यरीतिभेदे स्त्री "पदसंघटना रीति रङ्गसंस्थाविशेषवत्। उपकर्त्री रसादीनां सा पुनः स्याच्चतुर्विधा। वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा" विश्व ७अ "ओजःप्रकाशकैर्व्वर्णैर्बन्ध आडम्बरः पुनः। समासबहुला गौडी" सा० द० तल्लक्षणमुक्तं यथा "चञ्चद्भुजभ्रमितचण्डगदाभिघात—संचूर्णितोरुयुगलस्य सुयोधनस्य। स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि! भीमः" वेणीसं०। एषा च गौडजनप्रियत्वात् गौडैः प्रयुज्यमानत्वाच्च गौडीसंज्ञां लभते। गौडाङ्ग। गौडीया अत्रार्थे। "बहुतरसमासयुक्ता महाप्राणाक्षरा च गौडीया। रीतिरनुप्रासमहिमपरतन्त्रा स्तोकवाक्या च" पुरुषोत्तमः। ७रागिणीभेदे स्त्री संगीतदा०। पूर्व्वपदे परे समासे अस्य "अरिष्टगौडपूर्व्वम्" पा० अन्तोदात्तता। गौडपुरम्।

गौडपाद पुं० माण्डुक्योपनिषदि तदर्थकश्लोककारके वेदान्तिपण्डितभेदे। ते च, "बहिःप्रज्ञो विभुर्व्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः" इत्यादयः "दुर्द्दर्शमतिगम्भीरमजं साम्यं विशारदम्। बुद्ध्वा पदमनानात्वं नमस्कुर्म्मो यथाबलम्" इत्यन्ताः शतं श्लोकाः।

गौडवास्तुक पुं० "तदेव च बृहत्पत्रं रक्तं चेत् गौडवास्तुकम्" इत्युक्तलक्षणे वास्तुकभेदे। (चिल्लीशाक) राजनि०।

गौडिक त्रि० गुडे साधु गुडा० ठक्। १इक्षौ। गौडः गुडविकारः साधनतयाऽस्त्यस्य ठन्। २गुडविकारसाध्ये मद्यभेदे। "इक्षुणा गौडिका मद्या गुरवोऽनिलनाशनाः" "मधुमांसोपदंशं वा पिबेद्वाप्यथ गौडिकम्" इति च सुश्रु०

गौण त्रि० गुणमधिकृत्य प्रवृत्ता गौणी तत आगतः अण्। १सादृश्यलक्षणलक्ष्यसम्बन्धरूपया गौण्या लक्षणया प्रवृत्ते शब्दे "गौणश्चेन्नात्मशब्दात्" शा० सू०। २अमुख्ये च। "यदाऽऽगामिक्रियामुख्यकालस्याप्यन्तरालवत्। गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्म्मणि" उद्वा०त० हरिहरपद्धतिः। "एवमागामियागीय मुख्यकालादनन्तरः। स्वकालादुत्तरो गौणः कालः पर्वस्य कर्म्मणः" छन्दोग०। "तदा गौणमनन्तस्य नामानन्तेति विश्रुतम्" भा० शा० १८२ अ०। "बहूनि मम नामानि कीर्त्तितानि महर्षिभिः। गौणानि तत्र नामानि कर्म्मजानि च कानि चित्" ३४२ अ०। स्त्रियां ङीप्। "गौण्यसुतः" शा० सू०। ( गौणीवृत्त्यपराः ) गुणं सादृश्यमधिकृत्य प्रवृत्ता अण् ङीप्। ३सादृश्यमूलकलक्षणाभेदे स्त्री। "सादृश्यात्तु मता गौण्यस्तास्च षोडशभेदिताः" सा०द०। "सादृश्येतरसम्बन्धेऽपि इतो गौणत्वमिच्छन्ति। "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते। लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता" काव्य प्र०।

गुणोऽप्रधानमेव स्वार्थे प्रज्ञा० अण्। ४अप्रधाने कर्मादौ। "गौणे कर्म्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्" व्या० का०। गौणस्य भावः ष्यञ् गौण्य न०, त्व गौणत्व न०, तल् गौणता स्त्री, अप्रधानत्वे "गन्धादेः स्वोऽन्ते गौणत्वेऽनीयकः" सुप्व०। "वृत्तेरिष्टा तु गौणता" काव्यप्र० गौणत्वञ्च प्रसिद्धवस्तुभेदस्यैव यथाह शा०भा० "प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः। यस्य हि प्रसिद्धो वस्तुभेदः यथा केशरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ् मुख्योऽन्यः प्रसिद्धः। ततश्चान्यः पुरुषः प्रायिकैः क्रौर्य्यशौर्य्यादिभिः सिंहगुणैः सम्पन्नः प्रसिद्धः तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतः नाप्रसिद्धवस्तुभेदस्य"।

गौणचान्द्र पु०। "चान्द्रोऽपि द्विविधः प्रोक्तो गौणमुख्यप्रभेदतः। गौणः कृष्णप्रतिपदः पौर्णमास्यन्तईरितः" मलर० उक्ते कृष्णपदादिपौर्णमास्यन्ते चान्द्रे मासे अस्य व्यवस्था नि० सि० उक्ता यथा

तिकालतत्त्वमञ्जनः "चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधा" इत्युक्त्वा देशभेदेन तद्व्यवस्थामाह "कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन। येऽपीच्छन्ति न तेषाञ्च देशे विन्ध्यस्य दक्षिणे" इति विन्ध्यस्य दक्षिणे कृष्णादिनिषेधात् उत्तरतो द्वयोरभ्यनुज्ञा गम्यते तत्रापि शुक्लादिर्मुख्यः कृष्णादिर्गौणः शास्त्रेषु चैत्रशुक्लप्रतिपदीव चान्द्रसंवत्सरारम्भोक्तेः तदुक्तं दीपिकायां "चान्द्रोऽब्दोमधुशुक्लप्रतिपदारम्भः" इति न हि ये कृष्णादिं मन्यन्ते तेषां वत्सरारम्भोभिद्यते अतः शुक्लादिर्मुख्यः कृष्णादिना मलमासमासक्षयाद्य चान्द्रस्य सर्वनक्षत्रभोगेन नाक्षत्रमासः। सावनादीनां व्यवस्थोक्ता हेमाद्रौ ब्रह्मसिद्धान्ते "अमावास्यापरिच्छिन्नोमासः स्याद्ब्राह्मणस्य तु। संक्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः"। अत्र ब्राह्मणादीनां यत्र कर्मविशेषे वचनान्तरेण "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्यादिवन्माह उक्तस्तत्र दर्शान्तत्वमात्रं नियम्यते न तु सर्वकर्मसु दर्शान्त एवेति हेम्नाद्रादयमैभरेयादिनिधननियमपरिद्दिमिलाषवात् त्रैवर्णिकानां सर्वकर्मसु कालविशेषविधेः सावनादीनां शूद्रानुलोमादिपरत्वापत्तेरिति गुरुचरणाः। ज्योतिर्गर्गः "सौरमासो विवाहादौ यज्ञादौ सावनः स्मृतः। आब्दिके पितृकार्ये च चान्द्रोमासः प्रशस्यते"। ऋष्यशृङ्गः "विवाहव्रतयज्ञेषु सौरं मासमुपाचरेत्। पार्वणे त्वष्टकाश्राद्धे चान्द्रमष्टम्यथाब्दिके" ब्रह्मसारे "पक्षो हृष्टविवाहादौ यज्ञादौ सौर सावनौ।" ज्योतिर्गर्गः "आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा। सावनेनैव कर्त्तव्या शत्रूणां चाप्युपासना" विष्णुधर्मे "नक्षत्रसत्राण्ययनानि चन्द्रोमासेन कुर्य्याद्ग्रहगणात्मकेनेति" ब्राह्मे "तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च। विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशेत्"

**गौणिक** त्रि॰ गुणे रूपादौ साधु कथा॰ठक्। १गुणसाधने। गुणं वेत्ति तत्प्रतिपादकं ग्रन्थमधीते वा उक्था॰ ठक्। वसन्ता॰ ठक् वा। २गुणवेत्तरि ३तद्ग्रन्थपाठके च त्रि॰ गुणैः सत्त्वादिभिः निर्वृत्तः ठञ्। सत्त्वादिनिर्वृत्ते ४पदार्थे स्त्रियां ङीप्। तत्र गुणभेदेन गतिभेदो मनुना दर्शितो यथा

"येन यांस्तु गुणेनैषां संसारान् प्रतिपद्यते। तान् समासेन वक्ष्यामि सर्वस्यास्य यथाक्रमम्। देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसाः। तिर्य्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः। त्रिविधा त्रिविधैषा तु विज्ञेया गौणिकी गतिः। अधमा मध्यमाऽग्र्या च कर्मविद्याविशेषतः। स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः। पशवश्च मृगाश्चैव जघन्या तामसी गतिः। हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः। सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः। चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः। रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः। झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः। द्यूतपानप्रसक्ताश्च जघन्या राजसी गतिः। राजानः क्षत्रियाश्चैव राज्ञश्चैव पुरोहिताः। वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः। गन्धर्वा गुह्यका यक्षा विबुधानुचराश्च ये। तथैवाप्सरसः सर्वा राजसीषूत्तमा गतिः। तापसा यतयो विप्रा ये च वैमानिका गणाः। नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः

ज्योतींषि वत्सराः। पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः। ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च। उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः। एष सर्वः समुद्दिष्टस्त्रिप्रकारस्य कर्मणः। त्रिविधस्त्रिविधः कृत्स्नः संसारः सार्वभौमिकः"। गुणएव अङ्गुल्या॰ स्वार्थे ठक्। ५गुणशब्दार्थे पु॰

**गौतम** पु॰ गोतमस्यर्षेर्गोत्रापत्यम् ऋष्यण्। १गोतमर्षिगोत्रापत्ये २भरद्वाजसुते पु॰। स च वैवस्वते मन्वन्तरे सप्तर्षिमध्यवर्त्ती यथाह हरिवं॰ ७अ॰ "अत्रिर्वसिष्ठोभगवान् कश्यपश्च महानृषिः। गौतमश्च भरद्वाजो विश्वामित्रस्तथैव च। तथैव पुत्रो भगवानृचीकस्य महात्मनः। सप्तमो जमदग्निश्च ऋषयः साम्प्रतं दिवि" शतानन्दपिता अहल्यापतिश्च गौतमस्ततोभिन्न एव। तत्कथा च" रा॰ आ॰ ४८।४९अ॰ "गौतमस्याश्रमं श्रेष्ठं पूर्व्वमासीन्महात्मनः इत्यादौ दृश्या

अहल्यापुत्रे ३शतानन्दे "गौतमस्य शतानन्दः" वीरच॰। गौतमगोत्रस्य शरद्वतोऽपत्ये ४कृपाचार्य्ये ५तस्य भगिन्यां द्रोणपत्न्यां कृप्यां स्त्री ङीप्। "कृपः स्मृतः स वै ख्यात् गौतमी च कृपी मता। एते शारद्वताः प्रोक्ता एते वै गौतमाः स्मृताः" हरिवं ३२अ॰। कृपशब्दे २१९२पृ॰ दिष्टातः। "तत्र आसाद्य तरसा दारुणं गौतमीसुतम्" (अश्वत्थामानम्) भाग॰ १।७।४७श्लो॰। ६मायादेवीसुते शाक्यमुनौ अमरः। एकतादीनां मुनीनां ७पितरि। "आसन् पूर्व्वयुगे राजन्! मुनयोभ्रातरस्त्रयः। एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः" इत्युपक्रमे "तेषाञ्च

तपसा प्रीतो नियमेन दमेन च । अभवद् गौतमोनित्यं पिता धर्म्मरतः सदा" भा० शा० ३७अ० । ८दुर्गायां स्त्री मेदि० "गौतमीं कंसमर्दीं यशोदानन्दवर्द्धिनीम्" हरिवं०१७अ० । ९राक्षसीभेदे स्त्री शब्दर० । तस्येदमित्यण् ङीप् । १०गोदावरीनद्यां स्त्री शब्दर०ङीप् । "गौतमस्यावनाशिनी" इति गोदावरीस्नानमन्त्रलिङ्गात् तदवनाशाय तस्यास्तत्रानीतत्वाद्वा तथात्वम्" "ताम्राद्या वेत्रवती पयोष्णी गौतमी तु या । गोदावरी च वेणा च" भा० आ०१६५अ० । ११गोरोचनायाञ्च स्त्री राजनि० । १२गौतमप्रणीतविद्यायाम् १३गौतमप्रणीतायां षोडशपदार्थविद्यायाञ्च स्त्री । "अधीत्य गौतमीं विद्यां शृगालत्वमवाप्नुयात् । पुराणान्तरे तद्विद्याध्ययननिषेधः ।

**गौतमगङ्गा** स्त्री गौतमाय तदवनाशाय समानीतेति अच् । गौतमगङ्गायां गोदावरीनद्याम् राजनि० । ब्रह्मपु०गौतमं प्रति त्र्यम्बकवाक्यम् । "इयन्तु गौतमी पुत्र ! यत्र क्वापि समाश्रया । सर्वेषां सर्वदा नृणां स्नानान्मुक्तिं प्रदास्यति । क्वचित् काले पुण्यतमं किञ्चित्तीर्थं सुरङ्गके । सर्वेषां सर्वदा तीर्थं गौतमी नात्र संशयः । इयं माहेश्वरी गङ्गा गौतमी वैष्णवीति च । ब्राह्मी गोदावरी नन्दा सुनन्दा कामदायिनी । ब्रह्मतेजःसमानीता सर्वपापप्रणाशिनी" "एवमेषाऽपि ते प्रोक्ता गङ्गाख्याता महामते ! । माहेश्वरी वैष्णवी च सैव ब्राह्मी च पावनी । भागीरथी देवनदी हिमवच्छिखराश्रया । महेश्वरजटाभारेण ह्यविध्यमागतम् । विन्ध्यस्य दक्षिणे गङ्गा गौतमी सा निगद्यते । उत्तरे सापि विन्ध्यस्य भागीरथ्यभिधीयते"

**गौत्तम** पु० गच्छतीति गः गालकृत्तायति उद्+तम—अच् स्वार्थे अण् । स्थावरविषभेदे हेमच० । [सम्बन्धिनि ।

**गौदन्तेय** त्रि० गोदन्तस्येदम् शुभ्रा० ढक् । गोदन्तचन्दन

**गौदानिक** त्रि० गोदानं कर्म्मास्य ब्रह्मचर्य्यस्य महानाम्न्यादिभ्यः षष्ठ्यर्थे उपसंख्यानम्" वार्त्ति० ठक् १गोदानाख्यब्रह्मचर्य्ये सम्बन्धिनि । गोदाने उक्तं ठक् । २गोदानोक्ते कर्म्मणि । "उपरि दक्षिणं कृत्वा गामलक्ष्य ब्राह्मणेभ्यः प्रदाय गौदानिकं कर्म्म कुर्य्यात्" आश्व० गृ० १।१८।६। "ततो गोदानोक्तं कर्म्म क्वापि कुर्यात्" नारा० वृत्तिः । [गौधेरोऽप्यत्र गोधाशब्दे दृश्यम् ।

**गौधार** पु०गोधायाः अपत्यम् आरक् । गोधापुत्रे । गौधेयः

**गौधूम** त्रि० गोधूमस्य विकारः बिल्वा० अण् । गोधूमविकारे रोटिकादौ स्त्रियां ङीप् । "गौधूमं चरुं भवति" श त० ब्रा० ५।२।१।६। "तत्कोष्ठे समाप्तो गौधूमचषालः" कात्या०श्रौ०१४।१।२२। "गोधूमपिष्टमयचषालो भवतीत्यर्थः । [भवनयोग्ये क्षेत्रे ।

**गौधूमीन** न०गोधूमस्य भवनं क्षेत्रम् गोधूम—खञ् । गोधूम

**गौधेरकायणि** पुंस्त्री गोधेरस्यापत्यं वाकिना० फिञ् कुक् च । गौधेरापत्ये । पक्षे अत इञ् न कुक् । गौधेरि तदपत्ये पुंस्त्री ।

**गौनर्द्द** त्रि० गोनर्द्दे देशे भवः प्राचोभिन्नमते एङादित्वेऽपि वृद्धत्वाभावात् न छः किन्तु अण् । १गोनर्द्ददेशभवे २पातञ्जलमुनौ पु०

**गौपत्य** न० गोपतेर्भावः पत्यन्तत्वात् यक् । गोपतिभावे गोस्वामित्वे । "विश्वरूपाजो मा विश गौपत्येन" यजु० १।२२। "रायस्पोषं गौपत्यम्" । ४१।५८।

**गौपवन** पु० गोपवनशब्दे व्युत्पत्तिः । ऋषिभेदे स च मनुकाण्डस्य वंशस्थोमुनिभेदः "अथ वंशः पौतिमाषप्रात् गौपवनात् गौपवनः" शत० ४।६।१ ।

**गौपिक** पु० स्त्री गोपिकाया अपत्यम् ढकोबाधकः शिवा० अण् । गोपिकाऽपत्ये स्त्रियां ङीप् ।

**गौपिलेय** त्रि० गोपिल+चतुरर्थ्यां सख्या० ढक् गोपिल निर्वृत्तादौ । [सदृशे ।

**गौपुच्छ** त्रि०गोपुच्छमिव शर्करा० इवार्थे अण् । गोपुच्छ-

**गौपुच्छिक** त्रि० गोपुच्छेन क्रीतम् ठञ् । १गोपुच्छक्रीते । गोपुच्छेन तरति ठञ् । २गोपुच्छेन तारके च ।

**गौप्तेय** पु० स्त्री गुप्ता वैश्यजातिस्त्री तस्या अपत्यम् शुभ्रा० ढक् तस्याभिकाणोऽपवादः । गुप्ताया अपत्ये ।

**गौभृत** त्रि गोभृता निर्वृत्तं सङ्कला०अण् । गोभृता निर्वृत्ते

**गौमत** त्रि० गोमत्यां भवः पलद्या० अण् । गोमतीनदीभवे मत्स्यादौ ।

**गौमतायन** पु० स्त्री गोमत्यां भवादि वा० फञ् । गोमती भवादौ । ततः अरीहणा०चतुरर्थ्यां वुञ् । गौमतायनक० तन्निर्वृत्तादौ त्रि० । [निर्वृत्तादौ ।

**गौमयिक** त्रि० गोमयेन निर्वृत्तादि कुमुदा० ठञ् । गोमय

**गौमायन** पु०स्त्री गोमिनोगोत्रापत्यम् अश्वा०फञ् टिलोपः । गोस्वामिगोत्रापत्ये ।

**गौर** पु० गुङ्—गतौ र नि० वृद्धिः गुर—घञ् प्रज्ञाद्यण् वा । १चन्द्रे २श्वेतसर्षपे मेदि० ३धवष्टक्षे राजनि० ४पीतवर्णे ५श्वेतवर्णे ६अरुणवर्णे च पु० ७तद्विशिष्टे त्रि०

स्त्रियां गौरा०ङीष्। ८श्रीचैतन्यदेवे महाप्रभौ अनन्तसंहिता। ९पद्मकेशरे न० मेदि० १०स्वर्णे ११कुङ्कुमे च न० राजनि०। तत्र श्वेतवर्णयुक्ते "कैलासगौरं वृषमारुरुक्षोः" रघुः पीतवर्णाद्ये "गोरोचनापिनितान्त गौरे" कुमा० अरुणवर्णाद्ये "कीर्णैः पिष्टातकौघैः कृतदिवसमुखैः कुङ्कुमक्षोदगौरैः" रत्नाव० "तरुणादित्यगौरैश्च शरगौरैश्च वानरैः" रामा० कि०२०।स०। "नितान्तगौर्य्यौ हृतकुङ्कुमेज्वलम्" किरा० १२परिमाणभेदे यथोक्तं याज्ञ०" जालसूर्य्यमरीचिस्थं त्रसरेणुरजः स्मृतम्। तेऽष्टौ लिक्षा च तास्तिस्रो राजसर्षप उच्यते। गौरस्तु ते त्रयः षट् च यवोमध्यस्तु ते त्रयः" इति। १३मृगभेदे पु० स्त्री "गौरजो महिषः कृष्णः शूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम!। खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा। एते चैकशफाः क्षत्तः!" भाग० ३।१०।२२। अ०। "महोरगाश्च भयतो विद्रवन्ति सगौरकृष्णाः शरभाश्चमर्यः" भाग० ८।२।१६ अ०। १४विशुद्धे त्रि० मेदि०। "कडारा०कर्मधारयेऽस्य वा पूर्वनिपातः गौरपटः पटगौरः।

**गौरत्व** न० गौरस्य भावः कर्म वा ष्यञ्। वैश्यकर्मभेदे पाशुपाल्ये। "कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्" गीता।

**गौरग्रीव** पु० गौरी ग्रीवास्य। १देशभेदे २तद्देशवासिनि च तस्यापत्यम् तस्येदं वा रैवतका०छ गौरग्रीवय। ३तदपत्ये पुंस्त्री ४तत्सम्बन्धिनि त्रि० गौरग्रीवदेशश्च वृ०स०१४अ० कूर्मविभागे मध्यभागे उक्तः। "गौरग्रीवोद्देहिकपुण्ड्राश्वत्थ पाञ्चालाः"।

**गौरचन्द्र** पु० चैतन्यदेवे महाप्रभौ "कृष्णश्चैतन्यो गौराङ्गो गौरचन्द्रः शचीसुतः। प्रभुर्गौरो गौरहरि र्नामानि भक्तिदानि मे" अनन्तसंहिता एतस्य दृढतरप्रमाणत्वं संप्रदायविदो न मन्यन्ते।

**गौरजीरक** पु० कर्म०। श्वेतजीरके। राजनि०।

**गौरतित्तिरि** पुंस्त्री श्वेततित्तिरिभेदे। "तित्तिरिः सर्व्वदोषघ्नो ग्राही वर्णप्रसादनः। हिक्काश्वासानिलहरो विशेषात् गौरतित्तिरिः" सुश्रुते तन्मांसगुणोक्तिः [राजनि०।

**गौरत्वच्** पु० गौरी त्वक् यस्य। इङ्गुदीवृक्षे (जियापुति)

**गौरपृष्ठ** पु० यमसभास्थनृपभेदे। "इन्द्रद्युम्नो भीमजानुर्गौरपृष्ठो नलोगयः" भा०स० अ० यमसभावर्णने

**गौरमुख** पु० गौरं विशुद्धं मुखमस्य। शमीकर्षेः शिष्ये १मुनिभेदे तेन हि शिष्येण स्वपुत्रशृङ्गिशापवृत्तान्तं शमीकर्षिः परिक्षिते न्यवेदयत् तत्कथा भा०आ०४२अ०। "एवमादिश्य शिष्यं स प्रेषयामास सुव्रतः। परिक्षिते नृपतये दयापन्नो महातपाः। संदिश्य कुशलप्रश्नं कार्य्यवृत्तान्तमेव च। शिष्यं गौरमुखं नाम शीलवन्तं समाहितम्। सोऽभिगम्य ततः शीघ्रं नरेन्द्रं कुरुवर्द्धनम्। विवेश भवनं राज्ञः पूर्व्वं द्वाःस्थैर्निवेदितः। पूजितस्तु नरेन्द्रेण द्विजो गौरमुखस्तदा। आचख्यौ च परिश्रान्तो राज्ञे सर्व्वमशेषतः। शमीकवचनं घोरं यथोक्तं मन्त्रिसन्निधौ। गौरमुख उवाच। शमीकोनाम राजेन्द्र! विषये वर्त्तते तव। ऋषिः परमधर्मात्मा दान्तः शान्तो महातपाः" "तस्य त्वया नरव्याघ्र! सर्पः प्राणैर्वियोजितः। अवसक्तो धनुष्कोट्या स्कन्धे मौनान्वितस्य च। क्षान्तवांस्तव तत्कर्म पुत्रस्तस्य न चक्षमे। तेन शप्तोऽसि राजेन्द्र! पितुरज्ञातमद्य वै। तक्षकः सप्तरात्रेण मृत्युस्तव भविष्यति। तत्र रक्षां कुरुष्वेति पुनः पुनरथाब्रवीत्। तदन्यथा न शक्यञ्च कर्त्तुं केनचिदप्युत। न हि शक्नोमि तं यन्तुं पुत्रं कोपसमन्वितम्। ततोऽहं प्रेषितस्तेन तव राजन्! हितार्थिना"। गौरं शुक्लं मुखमस्य। श्वेतमुखादौ त्रि० स्त्रियां स्वाङ्गत्वात् वा ङीप्।

**गौरमृग** पु० स्त्री नित्यकर्म०। गौरवर्णे मृगभेदे स्त्रियां ङीप्। "क्रोष्टा मायोरिन्द्रस्य गौरमृगः" यजु० २४।३।

**गौरव** न० गुरोर्भावः कर्म वा पृथ्वा० वा अण्। १गुरुत्वे २तत्कर्म्मणि च। "तथापि यन्मय्यपि ते गुरुरित्यस्ति गौरवम्" माघः। "तामगौरवभेदेन" "आयस्तं गौरवमाश्रितेषु" कुमा०। "सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते" मनुः। गौरवं साधनतयास्त्यस्य अच्। ३गौरवहेतुके अभ्युत्थाने हेम०। गुरोरिदम् अण्। ४गुरुसम्बन्धिनि त्रि०। "मन्दगया भगोगेन गुरोर्गौरववत्सराः" वसिष्ठसिद्धान्तः।

**गौरवाहन** पु० श्वेतवाहने नृपभेदे। कुन्तिभोजो महातेजाः पार्थिवो गौरवाहनः" भा० स० ३३अ०।

**गौरवित** त्रि० गौरवं जातमस्य तार० इतच्। पूज्ये। "गौरवितक्रियाहेतुर्भक्तिः" शर्ङ्गध० मधुरानाथः।

**गौरशाक** पु० गौरः शाकोऽस्य। मधुकभेदे जटा०।

**गौरशिरस्** त्रि० गौरं शिरोऽस्य कान्तवृत्वात्। १शुक्लवर्णकेशयुक्ते २मुनिभेदे पु०। "शङ्खश्च लिखितश्चैव तथा गौरशिरा मुनिः" भा० स० ७अ० इन्द्रसभ्योक्तौ। स च

राजनीतिशास्त्रप्रणेता यथाह" भा० शा० ५८अ०। "विशालाक्षश्च भगवान् काव्यश्चैव महातपाः। सह-स्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः। भारद्वाजश्च भगवांस्तथा गौरशिरा मुनिः। राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः'

गौरसर्षप पुंकर्म्म०। १श्वेतसर्षपे (श्वितसरिषा) रत्नमाला तद्गुणा भावप्र० उक्ता यथा "गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते। सर्षपस्तु रसे पाके कटुःस्निग्धः सतिक्तकः। तीक्ष्णोष्णः कफवातघ्नो रक्तपित्ताग्निवर्द्धनः। रक्षोहरो जयेत् कण्डूं कुष्ठकोष्ठकृमिग्रहान्। यथारक्त-स्तथा गौरः किन्तु गौरोवरोमतः"। स च क्षौमशोधकः यथाह मनुः"श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः" द्रव्यशुद्धौ। "सगौरसर्षपैः क्षौमम्" गौरसर्षप-कल्केन साज्येन शोधितस्य च" याज्ञ०। २राजसर्षपत्र-यमिते परिमाणे च। "त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ता राजसर्षपास्तिस्रस्ते त्रयो गौर-सर्षपः" मनुः।

गौरसुवर्ण पु० गौरः श्वेतः सुष्ठु वर्णोऽस्य। चित्रकूट-प्रसिद्धे पत्रशाकभेदे "गौरसुवर्णं शिशिरं कफपित्त-ज्वरप्रणुत्। दाहार्त्तिभ्रान्तिरक्तश्रमहृत् पथ्यमेव च" राजनि० तद्गुणा उक्ताः।

गौरा स्त्री गौर+गौरादिगणे वर्णवाचिनएव गौरशब्दस्य ग्रहणात् विशुद्धार्थपरत्वे टाप्। विशुद्धायाम् स्त्रियान्तु हेमचन्द्रः। तदर्थपरतायामेव टाबन्तता वर्णपरत्वे तु ङीषन्तेत्याकारे स्थितम्।

गौराङ्ग पु०गौरं श्वेतं पीतं वाऽङ्गमस्य। १विष्णौ "शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः" भाग०१०स्क० तस्य युगावतारे श्वेताङ्गत्वात् पीताङ्गत्वाच्च तथात्वम्। गौरं विशुद्धमङ्गमस्य। विशुद्धकान्तियुक्ते नन्दनन्दने २श्री कृष्णे च "गौराङ्गं गौरदीप्ताङ्गं पठेत् स्तोत्रं कृता-ञ्जलिः। नन्दगोपसुतं चैव नमस्यामि गदाग्रजम्" ब्रह्म यामलम्। "गौराङ्गो नाटगम्भीरः स्वनामामृतलालसः" कृष्णयामलम्। ३नवद्वीपस्थशचीपुत्रे इति वैष्णवाः। ते हि तत् परतयैव यामलवाक्यद्वयं व्याचक्षुः ४गौर-वर्णदेहके त्रि०स्त्रियां ङीष्। गौराङ्गताहेतुरौषधरसं गरु० पु० १९४ अ० यथा "कुष्माण्डनालक्षारस्तु सगोमूत्रश्च तत्त्वचः। जलपिष्टा हरिद्रा च शिवा मन्त्राभावेन हि। माहिषेण पुरीषेण वेष्टिता सम-

मश्वज!। अस्या उद्वर्त्तनं कुर्य्यादङ्गगौरत्वसाधनम्"।

गौराजाजी स्त्री कर्म्म०। श्वेतजीरके राजनि०।

गौरादि पु० "षिद्गौरादिभ्यश्च" पा० उक्ते ङीषनिमित्ते शब्दगणभेदे स च गणः पा० ग० सू० उक्तोयथा "गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य पुट द्रुण द्रुम्ण द्रोण हरिण काकण पटर उणक आमलक कुवल बिम्ब बदर कर्कर तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल पाण्डश आढक आनन्द आश्वत्थ सृपाट आपच्चिक शष्कुल सूर्म्म शूर्प सूच यूष यूथ सूप मेथ वल्लक धातक सल्लक मालक मालत साल्वक वेतस वृध अतस उभय भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन् अनडुह अनड्वाह एषण (करणे) देह देहल काकादन गवादन तेजन रजन लवण औद्गा-हमानि गौतम पारक अयस्थूण भौरिकि भौलिकि भौलिङ्गि यान मेध आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन पोतन पातन पानठ आस्तरण अधिकरण अधिकार आग्र-हायण प्रत्यवरोहिन् सेचन सुमङ्गल (संज्ञायाम्) अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड षण्ड ऊर्द गुर्द शम सूद आर्द हृद पाण्ड भाण्ड लोहाण्ड कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् सोम सौधर्म रोहिणी (नक्षत्रे) रेवती (नक्षत्रे) विकल निष्कल पुष्कल कटी (श्रोणिवचने)। पिप्प-ल्यादयश्च। पिप्पली हरितकी कोशातकी शमी वरी शरी पृथिवी क्रोष्टी मातामही पितामही आकृतिगणः"। गौरशब्दस्य लोपधभिन्नवर्णवाचित्वेऽपि प्रातिपदिक-स्वरेणोत्सर्गतः कृष्णेतिवदन्तोदात्ततया अन्यतो ङीष-प्राप्तेरस्मिन् गणे पाठः।

"उपाद् द्व्यजजिनमगौरादयः"पा० उपात् परस्य द्व्यज-न्तादेरन्तोदात्ततायां पर्युदस्ते शब्दगणे स च गणः पा० ग० उक्तो यथा "गौर तैष तैल लेट लोट जिह्वा कृष्ण कन्या गुध कल्पपाद।" उपगौरः

गौरार्द्रक न० नित्यकर्म्म०। स्थावरविषभेदे हेमच०।

गौरावस्कन्दिन् पु० गुरोरिदं गौरवं गुरुपत्नीरूपं कलत्रं तदावस्कन्दति आ+स्कन्द—णिनि वेदे पृषो० वर्णविप-र्य्ययः। अहल्याजारे शक्रे इन्द्रागच्छेत्युपक्रमे "गौर-वास्कन्दिन्नहल्यायै जारेति" शत० ब्रा० ३।३।४।१८।

**गौराश्व** पु॰ गौरोऽश्वोऽस्य । १नृपभेदे । “अलर्कः कक्षसेनश्च गयो गौराश्व एव च” भा॰स॰ ८ अ॰ । वमवर्ण्योक्तौ २श्वेतवाहने श्वेताश्वे अर्जुने च ।

**गौरास्य** पुंस्त्री गौरमास्यं यस्य । गौरमुखे कृष्णदेहे वानरभेदे राजनि॰ । स्त्रियां जातित्वेऽपि योपधत्वात् न ङीष् किन्तु टाप् ।

**गौराहिक** पुंस्त्री गौरः शुभ्रः अहिः कर्म॰ संज्ञायां कन् । सुश्रुतोक्ते निर्विषे सर्पभेदे “गौराहिकवृक्षशय” इति सुश्रु॰ अहिशब्दे दृश्यम् ।

**गौरि** पु॰ गौरस्यापत्यम् इञ् । आङ्गिरसे ऋषिभेदे “गौरेराङ्गिरसस्य साम” श्रुतिः ।

**गौरिक** त्रि॰ गौरवर्णोऽस्त्यस्य ठन् । १श्वेतवर्णयुक्ते २श्वेतसर्षपे पु॰ “यवाश्चगौरिकोन्मिश्रैः पादलेपः प्रशस्यते” सुश्रुतः ।

**गौरिमत्** त्रि॰ गौरीं मन्यते मन+क्विप् ६त॰ ङ्यापोरिति संज्ञायां ह्रस्वः । १गौरीनामयुक्ते गौरीतीर्थे तत्रस्थे २नदीभेदे स्त्री शार्ङ्ग र॰ङीन् । (भोगवत् गौरिमत्) संज्ञायाम्” तद्वचनोक्तेः संज्ञायामेव ङीन् अन्यत्र ङीप् ।

**गौरिल** पु॰ गौरवर्णोऽस्त्यस्य बा॰इलच् । १सिद्धार्थे श्वेतसर्षपे २लौहचूर्णे च मेदि॰ ।

**गौरिवीति** पु॰ गौर्य्यां वेदवाचि वीतिः विशेषगतिरस्य “ङ्यापोरिति॰” संज्ञायां ह्रस्वः । शक्तिमुनिपुत्रे ऋषिभेदे । “गौरवीतिः शाक्त्यः चकमियाह” शत॰ब्रा॰१२।८।३।७। “स्तोमसामा गौरवीतेरवर्द्धनः” ऋ॰५।२९।११। गौरिवीते रेतन्नामकस्य मन्त्रद्रष्टुः” भा॰ । गौरिवीतिना दृष्टं साम अण् । गौरिवीत तद्दृष्टे साममेदे “तृतीयसवनाश्विहिष्णोः शिपिविष्टवतीषु गौरिवीतेन” कात्या॰ श्रौ॰ २५।१३।६। “गौरिवीतं नाम सामभेदस्तेन स्तुवीरन्” कर्कः ।

**गौरिसक्थ** पु॰ गौर्य्या इव सक्थि यस्य षच् समा॰ ह्रस्वः सुषामा॰ षत्वम् । गौरीतुल्यसक्थियुक्ते ।

**गौरी** स्त्री गौर+गौरा॰ ङीष् । १गौरवर्णायां स्त्रियाम् “कपोलभित्तीरिव लोध्रगौरीः” माघः । २हिमालयसुतायां कालीनाम्न्यां मेनकाकन्यायां तस्याः प्राक् कृष्णवर्णत्वेन जातत्वेऽपि पश्चात् पीताङ्गत्वात् तथात्वं कालिकापुराणशब्दे २०१५ पृ॰ ४५ अ॰ तन्मूलं दृश्यम् । पुराणान्तरे “योगाग्निदग्धदेहा सा पुनर्जाता हिमालये । शङ्खेन्दु कुन्दधवला ततो गौरीति सा स्मृता:” इत्युक्तम् तत्र कल्पान्तरविषयम् । “अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी” इत्युक्तायां ३अष्टवर्षायां स्त्रियाम् । ४हरिद्रायां ५दारुहरिद्रायाम् ६गोरोचनायां ७वरुणपत्न्याञ्च । ८प्रियङ्गुवृक्षे ९पृथिव्यां १०नदीभेदे च मेदि॰ “लेभे प्रसेनजिद्भार्य्यां गौरीं नाम पतिव्रताम् । अभिशप्ता तु सा भर्त्रा नदी वै बाहुदाऽभवत्” हरिवं॰ १२ अ॰ ११उक्तायां सूर्य्यवंश्यप्रसेनजिद्भार्य्यायाम् तस्या एव बाहुदानदीरूपत्वोक्तेः नदीविशेषः बाहुदानदीपर इति बोध्यम् । १२बुद्धशक्तिभेदे हेम॰ । १३मञ्जिष्ठायां १४श्वेतदूर्वायां १५मल्लिकायां १६तुलस्यां १७सुवर्णकदल्याम् १८आकाशमांस्याञ्च राजनि॰ । सर्व्वासाञ्चासां शुभ्रपीतरक्तविशुद्धपत्रपुष्पादियुक्तत्वात्तथात्वम् १९रागिणीभेदे संगीतदामो॰ । २०वाचि निघण्टुः । “गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्” ऋ॰१।१६४।४०। “गौरी गौरवर्णा शब्दब्रह्मात्मिका च वाक् मिमाय । मिमतिः प्रतिष्ठार्थे धातुः । प्रतिष्ठितानि घटादिद्रव्याणि तक्षती तत्तद्वाचकत्वेन निष्पादयन्ती । एकपदी अव्याकृतत्वेनैकप्रतिष्ठानैकरूपावात्मना । द्विपदी सुप्तिङ्भेदेन पदद्वयवती । चतुष्पदी नामाख्यातोपसर्गनिपातभेदेन । अष्टापदी आमन्त्रितसहितसप्तविभक्तिभिरष्टभेदेनाष्टापदी । नवपदी नवसु पदेषु भवन्ती बभूवुषी पश्चाद्बहुविधाभिव्यक्तिरूपेषु परमे व्योमन् उत्कृष्टे हृदयाकाशे मूलाधारे सहस्राक्षरानेकाकारेण व्याप्ताऽनेकध्वनिप्रकारा भवतीत्यर्थः” भा॰ । निरु॰११।४। व्याख्यान्तरं दृश्यम् । गौरीरिति सुलोपाभावश्छान्दसः । “सोमो गौरी अधिश्रितः” ऋ॰९।१२।३। गौरी गौर्य्याम् मध्यमायां वाचि” भा॰ “सुपां सुलुक्” पा॰ सप्तम्या लुक् । “ईदूतौ च सप्तम्यर्थे” पा॰ तस्य प्रगृह्यसंज्ञत्वात् न यणादेशः, भा॰ २१दीप्तिमत्यां स्त्रियां निरु॰ । “गौरी रोचते ज्वलतिकर्म्मणः । अथ पीतोवा गौरोवर्णः एतस्मादेव प्रशस्तो भवति तस्या एषा भवति” “गौरीर्मिमाय सलिलानि” श्रुतिमधिकृत्य उक्तनिरुक्तिः । पार्वतीरूपा गौरी च माघशुक्लचतुर्थ्यां पूज्या यथाह ति॰ भविष्योत्त॰ पु॰ माघशुक्लमधिकृत्य “चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता । सौभाग्यमतुलं कुर्यात्”

**गौरीकान्त** पु॰ ६त॰ महादेवे गौरीनाथादयोऽप्यत्र ।

**गौरीगुरु** पु॰ ६त॰ । पार्वतीपितरि हिमालये “गौरीगुरोर्ग-

कुरमाविवेश" रघुः "अखिलमिदममुष्य गौरीगुरोः" किरा० गौरीपितादयोऽप्यत्र ।

गौरीज न० गौर्यां रजसो जायते जन—ड । १अभ्रके राजनि० अभ्रकशब्दे ३१५ पृ० दृश्यम् । २कार्त्तिकेये पु० ।

गौरीतक्रम् न० गौर्या निर्मितं तक्रम् । "श्वयं मरिचं विश्वं जीरं नारङ्गं त्वचम् । एलाचूर्णान्वितं तक्रं धूपयेत् हर्तहिङ्गुना । गौर्येदं विहितं तक्रं सर्वदोषनिबर्हणम्" शब्दार्थचि० उक्ते तक्रभेदे

गौरीपट्ट पु० गौर्याः पट्टमिव स्थानम् । शिवलिङ्गस्थे गौर्याः पूजास्थाने शिवलिङ्गशब्दे विवृतिः

गौरीपुत्र पु० ६त० । कार्त्तिके गौरीतनयादयोऽप्यत्र [राजनि०

गौरीपुष्प पु० गौरी हरिद्रेव पीतं पुष्पमस्य । प्रियङ्गुवृक्षे

गौरीमन्त्र पु० तन्त्रसारोक्ते गौर्या मन्त्रभेदे तदुद्धारश्च "ह्रीं गौरि! रुद्रदयिते! योगेश्वरि! सवर्म (हुँ) फट्। द्विठान्तः षोडशवर्णोऽयं मन्त्रः वह्निरदीरितः"

गौरीललित न० गौरी हरिद्रेव ललितम् पीतवर्णत्वात् । हरिताले राजनि० ।

गौरीशिखर न० गौर्यास्तपःस्थानं शिखरम् । स्वनामख्याते पर्वतभेदरूपे तीर्थभेदे "प्रजासु पश्चात् प्रथितं तदाख्यया जगाम गौरी शिखरं शिखण्डिमत्" कुमा०

गौरीसुत पु० ६त० । १अष्टवर्षीढाजतनये शब्दार्थचि० । २कार्त्तिकेये च । [ठक् । गुरुपत्नीगामिनि ।

गौरुतल्पिक पु० गुरुतल्पं गुरुपत्नीं गच्छति परदारा०

गौलक्षणिक त्रि० गोलक्षणं वेत्ति तद्ग्रन्थमधीते वा "विद्यालक्षणकल्पान्ताच्च" वार्त्ति० ठक् । १गोलक्षणवेत्तरि २तद्ग्रन्थाध्येतरि च ।

गौलन्ध्य पुंस्त्री गोलन्दगोत्रापत्यं गर्गा० यञ् । गोलन्दशिगोत्रापत्ये स्त्रियां जातित्वात् ङीष् यलोपः । गोलन्दी तदपत्यस्त्रियाम् । गौलन्द्यस्य छात्राः कण्वा० अण् यलोपः । गौलन्दास्तच्छात्रेषु ।

गौलाङ्कायन पुंस्त्री गोलाङ्कस्य गोत्रापत्यम् अश्वा० फञ् । गोलाङ्कर्षेर्गोत्रापत्ये स्त्रियां जातित्वात् ङीष् ।

गौलिक पु० गुडे साधु ठक् डस्य लः । गुल्मकवृक्षे राजनि०

गौलोमन त्रि० गोलोमेव शर्करा० अण् । गोलोमसदृशे स्त्रियां ङीप् ।

गौल्मिक पु० गुल्मे रक्षणार्थस्थानभेदे नियुक्तः ठक् । गुल्मशब्दपरक्षणार्थस्थाननियुक्ते सैनिके सेनाभेदे "तत्रैव गुल्मे संप्रेक्ष्य सयानान् बद्धगौल्मिकान्" "लब्धा द्वाराणि च द्वाःस्थान्वा गुल्मानि गौल्मिकाः" भा० शा० दश० [राजनि० ।

गौल्य न० गुडस्य भावः ष्यञ् डस्य लः । माधुर्ये मधुरत्वे

गौशतिक त्रि० गोशतमस्यास्ति "एकगोपूर्वात्" पा० शतसहस्रादिसंख्यापूर्वकत्र ठञ् । गोशतस्वामिनि स्त्रियां ङीप् ।

गौष्ठ त्रि० गोष्ठ्यां भवः पलद्या० अण् । गोष्ठभवे स्त्रियां ङीप् । स्वार्थे अण् ङीप् गौष्ठीत्यपि गोष्ठ्याम् । तच्छस्यैव पलद्यादिषु पाठ इत्यन्ये ।

गौष्ठीन न० पूर्वं भूतं गोष्ठं खञ् । भूतपूर्वगोष्ठे । "तासु वाच स गौष्ठीने वने स्त्रीपुंसभीषणे" भट्टिः

गौसहस्रिक त्रि० गोसहस्रमस्यास्ति गौशतिकवत् ठञ् । गोसहस्रस्वामिनि ।

गौह्लव्य पुंस्त्री गुह्लुलोर्गर्षेर्गोत्रापत्यम् गर्गा० यञ् । गुह्लुगोत्रापत्ये स्त्रियां ङीप् लोहिता० स्वार्थे ष्फः । गौह्लव्यायनी ।

ग्धि स्त्री अद—क्तिन् वेदे घसादेशः उपधालोपश्च तस्य जग्धिधौ न स्थानिवत्त्वम् । भक्षणे । "सग्धिश्च मे" यजु० कौ० धृता श्रुतिः ।

ग्ना स्त्री गम—बा० ना डिच्च । स्त्रीमात्रे "ग्नास्ता व्यन्तयशो-ऽतन्वत वयिस्रो वयन्" ता० ब्रा० १।८।९। "गच्छन्ति पुंमा-सएना इति ग्नाः स्त्रियः" भा० "मेना ग्ना इति स्त्रीणां स्त्रियस्त्यायतेरपत्यपणकर्मणः । मेना मानयन्त्येनाम् । ग्ना गच्छन्त्येनाः" निरु० । २देवपत्न्याम् । "आ ग्ना अग्न इहावसे होत्राम्" ऋ० १।२२।१०। ग्ना देवपत्नी भा० । ग्ना अस्त्यस्य मतुप् मस्य वः । ग्नावत् सपत्नीके । "अभि यज्ञं गृणीहि नो ग्नावो नेष्टः" ऋ० १।१५।३। "ग्नावोऽः" संवुद्धौ विसर्गः भा० । ३वाचि निघ० । "तव ग्नावो विततः रुजात्वम्" ऋ० २।१।५। ग्ना स्तुतियाचक्षाः सन्तीति मतुप् । "छन्दांसि वै ग्नाः इति श्रुतेः ४वेदे च वेदस्य वाग्विशेषत्वात्स्वात्वम् । "नराशंसो ग्नास्पतिर्नो अव्याः" ऋ० २.३८।१० ग्नास्पतिर्देवपत्नीनां पतिस्त्वष्टा पतिर्वा" भा० "ग्नास्पतिरित्यत्र वा० सुट् । ग्नां या शब्दान्तरम् अतएव निपाद्ये ग्नाः इति विसर्गान्तं पठितम् ।

ग्मा स्त्री गच्छतेऽत्र गम—बा० क्म । पृथिव्यां निघ० ।

ग्रथ कुटिलीकरणे चाद० इदित् पर० सेट् । ग्रन्थते अग्रन्थिष्ट अग्रन्थे ।

ग्रथन न० ग्रन्थ—बा० ल्युट् नलोपः । (गाँथा) । ग्रथ्नते

"दोषस्थिरत्वात् ग्रथनाच्च" सुश्रुतः। "ग्रथनञ्च विदर्भञ्च संपुटोरोधनं तथा। योगः पल्लव इत्येते विन्यासाः षट्सु कर्म्मसु"। "मन्त्रेणान्तरितान् कृत्वा साध्यवर्णान् यथाविधि। ग्रथनं तद्विजानीयात् प्रशस्तं शान्तिकर्म्मणि" २तन्त्रसारोक्ते "मन्त्रेणान्तरितसाध्यवर्णविन्यासभेदे च।

ग्रथित त्रि॰ ग्रन्थ–संदर्भे क्त नलोपः। सूत्रादिना कृतसन्दर्भे माल्यादौ "पर्य्यायग्रथिताक्षसूत्रवलयाः" प्रबो॰। "अथास्य रत्नग्रथितोत्तरीयम्" "कुसुमैर्ग्रथितामपार्थिवैः" (स्रजम्) रघुः। "तच्छ्लोककूटमद्यापि ग्रथितं सुदृढं मुने" भा॰आ॰ १अ॰। "वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव" माघः। २क्लान्ते ३हिंसिते च मेदि॰।

ग्रथिन् त्रि॰ग्रन्थ–बा॰इनि किच्च नलोपः। जल्पके। "न्यक्तून् ग्रथिनो मृध्रवाचः" ऋ॰ ७।६।३। "ग्रथिनो जल्पकान्" भा॰।

ग्रथन पु॰ ग्रन्थ–बा॰ नङ्। स्तवके। "ललाटे नीलमित्युक्तं ग्रथः स्तवक उच्यते। कपुष्टिकाभितः केशाः मूर्द्ध्नि पश्चात् कपुष्टिका" भट्टनारायणधृतवाक्यम् "पश्चात् पतिरवस्थाय गुम्फलमौडुम्बरं ललाटे ग्रथनमाबध्नाति" गोभिलसूत्रम्।

ग्रन्थ संदर्भे वा चु॰उभ॰पक्षे क्र्या॰ प॰सक॰सेट्। ग्रन्थयति–ते ग्रथ्नाति अजग्रन्थत् अग्रन्थीत्। ग्रन्थयामास बभूव चकार चक्रे। जग्रन्थ जग्रथतुः–जग्रन्थतुः। जग्रन्थिथ जग्रथिथ इत्येके। अस्य कविकल्पद्रुमे षा॰ गणे च परस्मैपदिष्वेव क्र्यादिकस्य पाठः। णिचि तु उभयपदिता। भारद्वाजीयास्तु पठन्ति "णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामात्मनेपदेषूपसंख्यानम्" श्रन्थिग्रन्थ्योराधृषीयत्वात् णिजभावपक्षे ग्रहणम्। ग्रन्थति ग्रन्थम्। श्रन्थति मेखलान्देवदत्तः। ग्रन्थते ग्रन्थः। अग्रन्थिष्ट। श्रन्थते। अश्रन्थिष्ट। इति भारद्वाजीयमते आत्म॰। तेनोभयपदिता। सि॰कौ॰पक्षे भ्वा॰दित्वमपि तेन ग्रन्थति इत्यादि क्र्यादिकयोस्तु श्रथ्नीते। ग्रथ्नीते सि॰कौ॰। एतच्च कर्म कर्त्तरि न तु कर्त्तरि इत्यन्ये

उद्+उत्तोलने ग्रथने। "केशपक्षान् उदग्रथ्नंस्तरान्" आश्व॰गौ॰१०।८।८ "लताप्रतानोद्ग्रथितैः स केशैः" रघुः। "शास्त्राणि तस्योद्ग्रथितानि पद्मैः" भा॰ व॰ ११२ अ॰ "कर्णावतंसे ग्रथितदुरुपर्यन्ति कर्णाः" भाग॰ ३।२१।२७।

ग्रन्थ पु॰ ग्रन्थ–सन्दर्भे भावे घञ्। १गुम्फने। कर्म्मणि घञ्। २शास्त्रे "ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया" नैष॰। "ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात्" भा॰ आ॰ १अ॰। ३धने ४द्वात्रिंशद्वर्णमितानुष्टुप् छन्दस्के श्लोके हेम॰।

ग्रन्थकार पु॰ ग्रन्थं करोति कृ–अण् उप॰ स॰। ग्रन्थकारके (शाकल्यम्) "तस्माच्च भगवांस्तुष्टो ग्रन्थकारो भविष्यति" भा॰ आनु॰ २८४ अ॰। कृ–क्विप् ६त॰। ग्रन्थकृदप्यत्र। "ग्रन्थकृल्लोकविख्यातो भविताऽस्यजरामरः" भा॰ आनु॰ १४अ॰। "ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत् परामृशति" काव्यप्र॰। तृच्। ग्रन्थकर्त्तृ ण्वुल्। ग्रन्थकारक अत्रार्थे त्रि॰। तृचि स्त्रियां ङीप्।

ग्रन्थकुटी स्त्री ग्रन्थस्य कुटीव। लेख्यस्थाने त्रिका॰।

ग्रन्थन न॰ ग्रन्थ–भावे ल्युट्। (गाँथा) सन्दर्भे गुम्फने हेमच॰। णु॰ ग्रन्थ–युच्। ग्रन्थनाऽप्यत्र स्त्री।

ग्रन्थसन्धि पु॰ ६त॰। ग्रन्थस्य सन्धौ। तन्नामानि च कतिचित् त्रिका॰पठितानि। "सर्गो वर्गः परिच्छेदोद्घाताध्यायाङ्कसंग्रहाः। उच्छ्वासः परिवर्त्तश्च पटलः काण्डमस्त्रियाम्। स्थानं प्रकरणं पर्व्वाह्निकञ्च ग्रन्थसन्धयः"। उपक्रमे गुत्स्वादीत्युक्तेः अन्यदपि ग्रन्थसन्धिनाम भवतीति सूचितम्। तेन कुसुमाञ्जलौ स्तवकः, काव्यप्र॰उल्लासः,। वेदे प्रपाठकब्राह्मणानुवाकादयः।

ग्रन्थि पु॰ ग्रन्थ–संदर्भे भावे करणादौ वा यथायथं सर्व्वधातुभ्य, इन् नित्स्वरः, "खनिकष्यञ्ज्यसीत्यादिना इर्वा स्वरे भेदः। १वंशादिपर्व्वणि (गाँट) अमरः। २काण्डसन्धौ ३भद्रमुस्तायाम् ४हिताबलायां ५पिण्डालौ राजनि॰। ६बन्धने ७रोगभेदे मेदि॰। ८मायापाशे "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः" तैत्ति॰ उप॰। ग्रथि–कौटिल्ये भावे इन्। ९कौटिल्ये। कर्त्तरि इन्। १०ग्रन्थिपर्णद्रव्ये मेदि॰। रोगभेद निदानादि सुश्रुते दर्शितं यथा "अथातो ग्रन्थ्यपच्यर्व्वुदगलगण्डानां निदानं व्याख्यास्यामः। वातादयो मांसमसृक्प्रदुष्टाः सन्दूष्य मेदश्च कफानुविद्धम्। वृत्तोन्नतं विग्रथितन्तु शोफं कुर्व्वन्त्यतोग्रन्थिरिति प्रदिष्टः। आयम्यते व्यथ्यत एति तोदं प्रत्यस्यते कृत्यत एति भेदम्। कृष्णोऽमृदुर्व्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम्। दन्दह्यते धूप्यति चाग्निमान्द्यं पापच्यते प्रज्वलतीव चापि। रक्तः सपीतोऽप्यथ वापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम्। शीतो

विवर्णोऽल्परुजोऽतिकण्डूः पाषाणवत् संहननोपपन्नः। चिराभिवृद्धिश्च कफप्रकोपाद्भिन्नः स्रवेच्छुक्लघनञ्च पूयम्। शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महानल्परुजोऽतिकण्डूः। मेदःकृतो गच्छति चातिभिन्ने पिण्याकसर्पिःप्रतिमन्तु मेदः। व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुर्हि शिराप्रतानम्। संपीड्य सङ्कोच्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम्। ग्रन्थिः शिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात् सरुजश्चलश्च। अरुक् स एवाप्यचलो महांश्च मर्मोत्थितश्चापि विवर्जनीयः"

**ग्रन्थिक** न० ग्रन्थिरिव+कायति–कै–क ग्रन्थ+अस्त्यर्थे ठन् वा। १पिप्पलीमूले २ग्रन्थिपर्णे ३गुग्गुलौ ४करीरे वंशे ५दैवज्ञे ६सहदेवाख्ये पाण्डवे च पु० मेदि०।

**ग्रन्थित** त्रि० ग्रथि–क्त। गुम्फिते अमरः।

**ग्रन्थिदला** स्त्री ग्रन्थिर्दलेऽस्याः। मालाकन्दे राजनि०।

**ग्रन्थिदूर्वा** स्त्री ग्रन्थिप्रधाना दूर्वा शा० त०। (गाँटदूर्वा) दूर्वाभेदे राजनि०।

**ग्रन्थिन्** त्रि० ग्रन्थस्तदर्थो वा ज्ञेयतयाऽस्त्यस्य १ग्रन्थ–शिनि वा ग्रन्थार्थवेत्तरि २ग्रन्थयुक्ते तद्युविशिष्टे ३ग्रन्थनकर्त्तरि च। अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणोवराः मनुः। "ग्रन्थी भवति पण्डितः" सर्वत्र स्त्रियां ङीप्। "इन्द्र आपिर्हृदे चक्षुर्न ग्रन्थिनी चरण्युः" ऋ०१०।९५।६। ग्रन्थिनी ग्रन्थवती संदर्भवती" भा०। [राजनि०।

**ग्रन्थिपत्र** पु० ग्रन्थिप्रधानं पत्रमस्य। चोरकनाम गन्धद्रव्ये

**ग्रन्थिपर्ण** न० ग्रन्थौ पर्णान्यस्य ग्रन्थीनि ग्रन्थयुतानि वा पर्णान्यस्य। (गाठिवाला) १वृक्षभेदे अमरः। "ग्रन्थि पर्णं तिक्ततीक्ष्णं कटूष्णं दीपनं लघु। कफवातविषश्वासकण्डूदौर्गन्ध्यनाशनम्" भावप्र०। २चोरनामगन्धद्रव्ये राजनि० ३जतुकालतायां स्त्री राजनि० ४गण्डदूर्वायां स्त्री राजनि० गौरा० ङीष्।

**ग्रन्थिफल** पु० ग्रन्थि ग्रन्थियुक्तं फलमस्य। १कपित्थवृक्षे २मदनवृक्षे ३शाकवृक्षभेदे च राजनि०।

**ग्रन्थिबन्धन** न० ६त०। (गाटबाँधा) पुस्तकादौ १दृढबन्धनार्थे बन्धनभेदे २जन्मतिथौ गोरोचनायुतसूत्रबन्धने च। "गुडदुग्धतिलान्दद्यात् जन्मग्रन्थेश्च बन्धनम्। गुग्गुलुनिम्बसिद्धार्थदूर्वागोरोचनायुतम्" कल्पचि०।

**ग्रन्थिब(व)र्हिन्** पु० ग्रन्थिं बर्हति बर्ह–स्तृतौ ग्रन्थिं वर्हति वर्ह–वधे णिनि। ग्रन्थिपर्णवृक्षे शब्दर०

**ग्रन्थिभेद** पु० ग्रन्थिं वस्त्रादिग्रन्थिं भिनत्ति भिद–अण् उप०स०। (गाटकाटा) चौरभेदे "अङ्गुल ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे। द्वितीये हस्तचरणौ तृतीये वध मर्हति" मनुः "उत्क्षेपकग्रन्थिभेदौ करसंदंशहीनकौ। कार्यौ द्वितीयापराधे करपादैकहीनकौ" याज्ञ०

**ग्रन्थिमत्** त्रि० ग्रन्थिरस्त्यस्य मतुप्। १ग्रन्थियुक्ते (गांटयुक्ते) स्त्रियां ङीप् "लघ्वात्वचं ग्रन्थिमतीं दधाना" कुमा० (हाडजोडा) २अस्थिसंहारिवृक्षे पु०भावप्र०

**ग्रन्थिमत्फल** पु०ग्रन्थिमत् फलमस्य। लकुचवृक्षे (मान्दार) इति ख्याते वृक्षे राजनि०।

**ग्रन्थिमूल** न० ग्रन्थि गुम्फनवत् मूलं यस्य। १गृञ्जने राजनि० २मालादूर्वायां स्त्री टाप् राजनि०।

**ग्रन्थिल** त्रि० ग्रन्थिर्विद्यतेऽस्य सिध्मा० लच्। ग्रन्थियुक्ते मेदि० २पिप्पलीमूले न०राजनि०। ३आर्द्रके न०शब्दच० ४विकङ्कतवृक्षे (बइचि)५करीरवृक्षे च अमरः। ६तण्डुलीयशाके ७छिन्नावल्यां ८पिण्डालौ ९चोरनामगन्धद्रव्ये १०विकङ्कटवृक्षे च राजनि०। भद्रमुस्तायां ११मालादूर्वायां १२गण्डदूर्वायाञ्च स्त्री राजनि०। [त्रिका०

**ग्रन्थिहर** पु०ग्रन्थिं हरति हृ–अच्। अमात्ये मन्त्रिणि

**ग्रन्थीक** न० ग्रन्थिक+पृषो०। पिप्पलीमूले हि०को०

**ग्र(ग्ल)प्स** पु० ग्रन्थ+पृषो० द्विधारूपम्। स्तवके। "अथास्मै दुग्धेन शालाग्र(ग्ल)प्सेन, शीमन्तं व्यूहति" आश्व० गृ० १।१४।४। ग्र(ग्ल)प्सः स्तवक उच्यते"नारा०।

**ग्रस** भक्षणे भ्वा० आत्म० सक० सेट्। ग्रसते अग्रसिष्ट जग्रसे। उदित् ग्रसित्वा ग्रस्त्वा। ग्रस्तः। "द्विमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम्" माघः "इमकाममपि ग्रासं ग्रसे लब्धं यदृच्छया" भा० शा० १७९ अ०। "य इमां पृथिवीं कृत्स्नां संक्षिप्य ग्रसते पुनः" भा०व० २६ श्लो०। "राहुग्रस्ते निशाकरे" भा० व० २६६७ श्लो०। ग्रासः। ग्रसनम्। क्विप् धातुत्वात् दीर्घः ग्रत् ग्रसौ ग्रस इति।

**ग्रस** भक्षणे वा चुरा०उभ०पक्षे भ्वा०पर०सक० सेट्। ग्रासयति–ते ग्रसति अजिग्रसत्–त अग्रासीत् अग्रसीत्। ग्रासयाम् बभूव आस चकार चक्रे। ग्रसितः। "न च ग्रासितमन्येन ग्रसेदर्थं कथञ्चन" मनुः।

**ग्रसन** न० ग्रस–भावे ल्युट्। १भक्षणे "ग्रसनादजगरः शरीरमात्रहरो न विषात्" सुश्रु०। २राहुणा चन्द्रसूर्ययोरुपरागे च। ६०व० १ अ० ग्रस्ते सर्वाणि

३पाते च । उपरागशब्दे विवृतिः । ४असुरभेदे पु० "इहा नदन्नमाहात्म्यं सैनानीर्यमनोऽसुरः" । "तम-प्रत्ययं जगतामजय्यं चक्रं पपात ग्रसनस्य कण्ठे" । "द्विधा तु कृत्वा ग्रसनस्य कण्ठं सहस्रधारास्त्वघोरनाभि" इति च मत्स्यपु० ।

ग्रसिष्ठ त्रि० अतिशयेन ग्रसिता ग्रसितृ+इष्ठन् तृचो लोपे इटोऽसिद्धिः । ग्रसितृतमे "भोगमानत्वादिषु ग्रसिष्ठ श्रो ग्रशीरजीगः" ऋ० १।१६१।७ "ग्रसिष्ठः ग्रसितृतमः" भा०

ग्रसिष्णु त्रि० ग्रस–इष्णुच् । १ग्रसनशीले "अत्ता चराचरग्रहणात्" शा० सू० न्यायात् २परब्रह्मणि च । "भूत-भर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च" गीता ।

ग्रस्त त्रि० ग्रस–कर्मणि क्त उदित्त्वात् क्त्वोवेट्कत्वेन इडभावः । १भक्षिते लुप्तवर्णपदे २असंपूर्णोच्चारितशब्दे न० अमरः ।

ग्रस्तृ त्रि० ग्रस+तृच् आर्षे इडभावः । भक्षके । सिंहिका-सुतं राहुम्" "ग्रस्तारं चैव चन्द्रस्य सूर्य्यस्य च महा-प्रभम्" हरिवं० २२६ अ० ।

ग्रस्तास्त पु० ग्रस्त एवास्तः । अदृष्टमोक्षे ग्रासोत्तरमस्त-• गते सूर्य्ये चन्द्रे च । उपरागशब्दे १२१५ पृ० विवृतिः ।

ग्रस्तोदय पु० ग्रस्तस्य उदयः । ग्रासोत्तरं रविचन्द्रयोरु-दये "ग्रस्तास्तादौ त्रिशेषमाह गुरुः "ग्रस्तास्ते त्रिदिनं पूर्वं पश्चात् ग्रस्तोदये तथा । खण्डग्रासे च त्रिदिनं निःशेषे सप्त सप्त चेति" । कश्यपस्तु "ग्रस्तोदये परे दोषो ग्रस्तास्तेऽर्वाक् शशीनयोः । द्युनिशा-र्द्धेंऽुभयं तत् खण्डाखण्डव्यवस्थया" इत्याह ।

ग्रस्य त्रि० ग्रस–कर्मणि बा० यत् । अदनीये "यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्" भा० उ० ३२अ० । ण्यत् । ग्रास्य तदर्थे त्रि० ।

ग्रह हस्तव्यापारभेदे स्वीकारे ज्ञाने च क्र्या० उभ० सक० सेट् । गृह्णाति गृह्णीते । गृह्णीयात् गृह्णीत । गृह्णातु गृ-ह्णाण । अगृह्णात् अगृह्णीत । अग्रहीत् ग्रहिलिटि इटो दीर्घः । अग्रहीष्टाम् । अग्रहीष्ट । जग्राह जगृहतुः जग्रहिथ जगृहिव । जगृहे जगृहिषे । ग्रहीता गृ-ह्यात् ग्रहीषीष्ट ग्रहीष्यति ते । ग्रहीतव्यः ग्रहणीयम् ग्राह्यम् पदास्यैरिपक्षेषु गृह्यम् । छन्दसि प्रतिगृह्यम-पिगृह्यं लोके तु प्रतिग्राह्यम् अपिग्राह्यम् । अच्चरे-ण ग्राहः । अगोतिचि अप् ग्रहः । गृहीतः गृहीतिः । ग्रहणम् अप् ग्रहः । उद्ग्राहः उद्ग्रहः संग्राहः संग्रहः । गृहीतम् । गृहीत्वा प्रतिगृह्य । ज्ञाने "हंसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिरिव स्वि-कायाम् । ग्रहीतुकामादरिणाशयेन" नैष० । "गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः" भाषा० । हस्तव्यापारे "गृहाण शस्त्रं यदि सर्ग एष ते" "तौ जगृहतुः पादान् राजा राज्ञी च मागधी" रघुः । "दश गृहान् गृह्णाति" श्रुतिः स्वीकारश्च स्वत्वापादनव्यापारः सेवनादिना आयत्तीकरणञ्च तत्राद्ये "तत्र किञ्चिन्न गृह्णीयात् प्राणैः कण्ठगतैरपि" प्रा० त० गङ्गामा० द्वितीये "शर-द्रौद्रं न गृह्णीयात् गृह्णीयात् मार्गपौषयोः" नीतिः कर्मणि गृह्यते अग्राहि अग्राहिषाताम् अगृहीषाताम् । अग्राहिष्यते अग्रहीष्यते । णिच् ग्राहयति ते अजी-गृहत् त । सन् जिघृक्षति ते । यङ् जरीगृह्यते । यङ्-लुक् जरी(रि)गृहीति जर्गृहीति जरी(रि)गर्ढि जर्गर्ढि मुग्ध० सि० कौ० जागृहीति जागर्ढि । ज्ञान-सामान्यार्थत्वे णिचि प्रयोज्यस्य कर्मत्वं "शिष्यं वेदं ग्राहयतीति । गृहणमात्रार्थकत्वेऽपि कर्मत्वम् मुग्धबो० "अजीगृहत्तं जनको धनुस्तत्" भट्टिः । "अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक" कुमा० अन्यमते भजनीयत्वेन विवाह्यत्वेन च बोधयाञ्चकारेत्यर्थकत्वात् नानुपपत्तिः । मुग्धबो० द्विकर्मकमध्ये पाठात् "जग्राह यज्वनोभोज्यम्" उदा० पा० मते न द्विकर्मकतेति भेदः । वेदे हस्य भकारः । "हृभामगृभ्णन् रसनाम्नतस्य" श्रुतिः । आर्षेऽपि क्वचित् हस्य भः गृभीतशब्दे उदा० ।

अति+अतिक्रम्य वर्तने "अतिगृह्याव्ययनशेपेक्षकर्त्तरि तृतीयायाः" पा० "अतिक्रम्य ग्रहोऽतिग्रहः चारित्र्य-तोऽतिगृह्यते चारित्रेणान्यानतिक्रम्य वर्त्तते इत्यर्थः" सि० कौ० "तएतानतिग्राह्यान् दृष्ट्वा तानत्यगृह्णत" शत० ब्रा० ४।५।४।२

अनु+आनुकूल्यकरणे "वयमप्यनुगृह्णीमो द्विधा कृत्वा वरू-थिनीम्" भा० वि० ८८६ श्लो० ।

सम्+अनु+बन्धनादिना आनुकूल्ये "अवमुच्य किरीटं स केशान् समनुगृह्य च । उदतिष्ठज्जरासन्धः" भा० स० ८८५ श्लो० ।

अप+सन्ततधारातोविच्छिद्य पृथक्कृत्य ग्रहणे "अपगृह्य पुनरिन्दुवायू" कात्या० श्रौ० ८।६।२ "अपगृह्य सन्ततधारातोविच्छिद्य पृथक्कृत्वा पुनस्तस्या एव धारायाः गृह्णाति" कर्कः अपसारणे च "अथैन"

नामपगृह्णाति" शत०ब्रा० १।८।३।१६। "उभौ हस्तौ अपगृह्योपास्ते" २।५।२।४२. रोधने च। "स (व्यासः) तं विप्रः सह वज्रेण बाहुमपगृह्णात्तपसा जातमन्युः" भा०आश्व० ९अ०

अपि+पिधाने "यदेतत् कर्णावपिगृह्य निनदमिव" छा०उ० "अपिगृह्य पिधाय" भा० "तस्मात् कर्णं पितृदैवत्यं हि तदपिगृह्यम्" शत०ब्रा०३।८।१।१५। आच्छादने च "तस्मात् कल्याणस्यापि गृह्णीत" शत०ब्रा०४।१।३।८

अभि+आभिमुख्येन ग्रहणे "अम्बालिका च बलवदभिगृह्य चक्षुश्रेणा परिणेतुमात्मनोभवनमानीता" दशकु०

अव+प्रतिरोधे नियमे च "अन्योऽपि नाम न महानवगृह्यसाध्यः" माघः "देवमीयं शंसति पदावग्रहम्" तैत्ति० "वृष्ट्यर्थं तद्विघातेऽप्यवग्रहावग्रहौ समौ" अमरः "रावणावग्रहक्लान्तमिति वागमृतेन सः"। "वृष्टिर्भवति शस्यानामवग्रहविशोषिणाम्" रघुः।

वि+अव+अवनतौ अक०। "तस्यैव कपालम् व्यवगृहीतान्तमिव भवति व्यवगृहीतान्तेव हि द्यौः" शत०ब्रा०७।५।१।२ "व्यवगृहीतान्तं विविधमवगृहीतोऽवनतः अन्तो यस्य" भा०

आ+आभिमुख्येनाकर्षणे "आ त एता वचोयुजा हरी गृभ्णे सुमद्रथा" ऋ० ८।४५।३९ "आगृभाय अस्मदभिमुखं यातुं हस्ताभ्यामाकर्षयेत्यर्थः" भा०। निर्बन्धे "चलेऽपि काकस्य पदार्पणाग्रहः" नैष०।

आ+सम्+आभिमुख्येन संग्रहे "आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय" ऋ० ८।८१।१। आसंगृभाय आभिमुख्येन संगृहाण" भा०

उद्+ऊर्द्ध्वं विसृज्य दाने "वाजस्य मा प्रसव उद्ग्राभेणोदग्रभीत्" यजु०१७।६३। ऊर्द्ध्वं विसृज्य दानम् उद्ग्राहः" वेददी० "उद्ग्राभ्णते स्वाहोद्गृहीताय स्वाहा" २२।२६। उद्धृत्य उत्तोल्य ग्रहणे "शक्तिं योऽप्युग्रामुदग्रहीत्" भट्टिः।

उद्+ग्रह+णिच्। उद्ग्राहि—उपन्यासे "उद्ग्राहितमुपन्यस्तम्" वैजयन्ती "विशेषविदुषः शास्त्रं यत्तवोद्ग्राह्यते मया" माघः। "सोद्ग्राहः सुनीतानि" भट्टिः

उप+उद्+दाने। "तस्य ह मुखमुपोद्गृह्णन्नुवाच" छा०उ० "मुखं द्वारं विद्यायादाने तीर्थमुपोद्गृह्णन् आनमित्यर्थः" भा०

उप+सामीप्येन ग्रहणे "दृषापविश्रमुपगृह्य हिंकरोति" शत० ब्रा० ४।२।२।११ अवष्टम्भे च "तेजो वा अग्नि-भूयस्तद्वा एतद्वायुमुपगृह्याकाशमभितपति" छा० उ० "तद्वा एतत्तेजो वायुमुपगृह्यावष्टभ्य आत्मना निश्चलीकृत्य वायुमाकाशमभिव्याप्नुवत्तपति" भा०

नि+बलेन निरोधे प्रातिकूल्यकरणेन नियमने च। "स वै प्रविशमानस्तु शुक्रेणान्तेन रक्षिणा। निगृहीतो बलाद्द्वारि सोऽवातिष्ठत पार्थिवः" भा०व० १२६अ०। "निगृहीतः कन्धरायां शिशुना दृढमुष्टिना" हरिव० २०अ०। "तस्मात् यस्य महाबाहो निगृहीतानि सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता" गीता "अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" याज्ञ०

प्रति+नि+प्रतिरूपतया ग्रहणे "आदित्यपात्रेण द्रोणकलशात् प्रतिनिगृह्णीते" शत०ब्रा० ४।३।५।६

वि+नि+विशेषेण निग्रहे "शिरःसु विनिगृह्णीतान् योधयामास पाण्डवः" भा० आ० १२८ अ०

निस्+निःशेषेण ग्रहणे निग्रहे च "शक्रस्त्वमिति यो दैत्यैर्निर्गृहीतः किलाभवत्" भा०आनु०१९९८श्लो०

परि+परितो ग्रहणे "बाहुना परिजग्राह दक्षिणेन शिरोधराम्" भा०आ०६२२श्लो०। "स्नानेन परिगृह्य तान्" मनुः। स्वीकारे च "कस्य गुप्तः परिग्रहः" भा० आ० गन्धर्वं प्रति अर्जुनोक्तिः

प्र+प्रकर्षेण ग्रहणे। "प्रगृहीतस्य योऽमात्यो निगृहीतस्य कारणैः" भा०वि० १२श्लो०। सन्धिकार्यनिषेधाय विशिष्य ग्रहणे "प्रगृह्यं पदम्" पा० प्रगृह्यशब्दे दृश्यम्।

प्रति+दत्तवस्तुनो ग्रहणे "सप्त वित्तागमाः धर्म्या दायो लाभः क्रयो जयः। विभागः संप्रयोगश्च सत्प्रतिग्रह एव च" स्मृतिः "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्" स्मृतिः अदृष्टार्थत्यक्तद्रव्यस्वीकार एव प्रतिग्रहो मुख्यः अन्यत्र भाक्तः। "घोरे प्रतिग्रहस्याव्यक्तप्राज्ञो धर्मस्य विक्रयः" "तत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि" प्रा० त० गङ्गामा०। "प्रतिग्रहादपावृत्तः सन्तुष्टो येन केनचित्" प्रा०त० "अभिपद्य च बाहुभ्यां प्रत्यगृह्णादमर्षितः" भा० व० ४४१ श्लो०। प्रतिरूपतया शस्त्रादिग्रहणे च "तथैव पाण्डवो भीष्मे दिव्यमस्त्रमुदीरयन्। प्रत्यगृह्णादमेयात्मा" भा० वि० ६० अ०। स्वीकारमात्रे "प्रतिग्रहीतुं प्रणयिप्रियत्वात्" कुमा० "अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः" रघुः।

वि+विरोधे रोधने। "अन्धीत न चाचार्यं विगृह्णीयाच्च बन्धुभिः" भा० आ०७०अ० "विगृह्य शत्रून् कौन्तेय !

ज्ञेयः क्षितिपतिस्तदा” भा० आन० ६अ० । विरोधेन स्थाने “न विगृह्णाति वैपक्ष्यम्” भाग०३।२२।२४ श्लो०। “अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः” हरिः विग्रहेण इत्यर्थे अव्ययीभावः । विगृह्यते देहः । “रक्ता-प्रसाधितभुवः क्षतविग्रहाश्च” वेणी० पञ्चविधवृत्तिस्फु-टीकरणवचनभेदे “वृत्त्यर्थविवरणं विग्रहः” सि०कौ० “समस्या विग्रहस्तथा” शब्दश०प्र० ।

सम्+संग्रहे नानास्थानपठितस्य एकत्र समावेशार्थे संदर्भ-भेदे “संग्रहेऽस्तमुपागते” वाक्यपदीयम् । सङ्कोचने “संगृह्णती कौशिकमुत्तरीयम्” भा०व० १५६०२श्लो० एकत्रीकरणे “संगृह्य तत्समं रङ्गैर्निर्ममे स्त्रियमुत्तमाम्” ८५५९ श्लो० सम्यक्ग्रहणे “औषधानि च सर्वाणि मूलानि च फलानि च । चतुर्विधांश्च वैद्यान् वै संगृह्णी-याद्विशेषतः” भा०शा० २६५४ श्लो०। सुटौ संग्राहः सङ्ग्रहे द्रव्यसंग्रहः” सि०कौ०

ग्रह आदाने वा चुरा० उभ० पक्षे भ्वा० पर० सक० वेट् । ग्राहयति ते ग्रहति । अजिग्रहत् त अग्रहीत् अ-ग्राहीत् ।

ग्रह पु० ग्रह–अच् । १नवसु सूर्यादिषु । २बालारिष्टकारेषु स्कन्दग्रहादिषु भावे अप् । ३अनुग्रहे, ४निर्बन्धे, “अन-भ्यसभ्यर्थनवग्रहग्रहा” नैष० ५आदाने ग्रहणे, ६रणो-द्यमे, ७ज्ञाने, ८चन्द्रसूर्ययोर्ग्रासे च “तदा सम्भाव्यते ग्रहः” इति ज्योतिषम् “एकरात्रं परित्यज्य कुर्यात् पार्थिवग्रहं ग्रहे” ज्योति० सूर्योदयश्च “सूर्यश्चन्द्रो मङ्गलश्च बुधश्चापि बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति नव ग्रहाः”। एषां गतिभेदाः खगगति-शब्दे २४१२पृ०दर्शिताः । राहुकेत्वोर्यथा ग्रहत्वं धी०धा० व्यवस्थापितं तच्च केतुशब्दे २२२४ पृ०उक्तम् । शा०ति० १पटले “लोकानब्धीन् स्वरान् धातून् मुनीन् द्वीपान् ग्र-हानपि । समिधः सप्तसंख्याताः सप्त जिह्वा हविर्भुजः” इत्यनेन ग्रहाणां यत् सप्तत्वमुक्तं तत् वराहमताभि-प्रायेण । तच्च ११११पृ० उपरागशब्दे अस्वतास्वाद-विशेषादित्याद्युक्तम् । अन्यमताभिप्रायेण ग्रहाणां नवत्वं ६पटले शा०ति०उक्तं यथा “नव वर्गाः समुत्पन्ना नवरत्नेश्वरा ग्रहाः । अर्केन्दुरक्तशशिगुरुभृगुमन्दाहि-केतवः । माणिक्यं मौक्तिकं चारु विद्रुमं गारुड-मतः । पुष्परागं वज्रवरं नीलं गोमेदकं शुभम् । वैदूर्यं नव रत्नानि” ।

स्कन्दग्रहादीनां नवानां लक्षणविभागः सुश्रुते उक्तो यथा “अथातो नवग्रहाकृतिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ बालग्रहाणां विज्ञानं साधनञ्चाप्यनन्तरम् । उत्पत्तिं का-रणञ्चैव सुश्रुतैकमनाः शृणु ॥ स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार२ एव च । शकुनी३ रेवती४ चैव पूतना५ चान्धपूतना६ ॥ पूतना शीतनामा७ च तथैव मुखमण्डि-का८ । नवमो नैगमेयश्च९ यः पितृग्रहसंज्ञितः ॥ धा-त्रीमात्रोः प्राक्प्रदिष्टापचाराच्छौचभ्रष्टान्मङ्गलाचारहीनान् । त्रस्तान् हृष्टांस्तर्जितान् क्रन्दितान् वा पूजाहेतोर्हिंस्युरेते कुमारान् ॥ ऐश्वर्यस्थास्ते न शक्या विशन्तो देहं द्रष्टुं मानुषैर्विश्वरूपाः । आप्तं वाक्यं तत्समी-क्ष्याभिधास्ये लिङ्गान्येषां यानि देहे भवन्ति ॥ शूनाक्षः क्षतजसमगन्धिकः स्तनद्विट् वक्रास्यो हतचलितैकपक्ष्मनेत्रः । उद्विग्नः सुललितचक्षुरल्परोदी स्कन्दार्त्तो भवति च गा-ढमुष्टिवर्च्चाः१ ॥ निःसंज्ञो भवति पुनर्भवेत्ससंज्ञः संरब्धः करचरणैश्च नृत्यतीव । विण्मूत्रे सृजति विनद्य जृम्भ-माणः फेनञ्च प्रसृजति तत्सखाभिपन्नः२ ॥ स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः संस्राविव्रणपरिपीडितः सम-न्तात् । स्फोटैश्च प्रततनुः सदाहपाकैर्विज्ञेयो भवति शिशुः क्षतः शकुन्या३ ॥ रक्तास्यो हरितमलोऽतिपा-ण्डुदेहः श्यावो वा ज्वरमुखपाकवेदनार्त्तः । रेवत्या व्यथिततनुश्च कर्णनासं मृद्नाति ध्रुवमभिपीडितः कुमारः४॥ स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ विड्भिन्नं सृजति च काकतुल्यगन्धिः । छर्द्यार्त्तो हृषिततनूरुहः कुमार-स्तृष्णालुर्भवति च पूतनागृहीतः५ ॥ यो द्वेष्टि स्तनम-तिसारकासहिक्काछर्दीभिर्ज्वरसहितैश्च कृश्यमानः । दुर्वर्णः सततमधःशयोऽम्लगन्धिस्तं ब्रूयुर्भिषजोऽन्ध-पूतनार्त्तम्६॥ उद्विग्नो भृशमतिवेपते प्ररुद्यात् संलीनः स्वपिति च यस्य चान्त्रकूजः । विस्राङ्गो भृशमतिसा-र्यते च यस्तं जानीयाद्भिषगिह शीतपूतनार्त्तम्७ ॥ म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो बह्वाशी कलुषसिरा-वृतोदरो यः । सोद्वेगो भवति च मूत्रतुल्यगन्धिः स ज्ञेयः शिशुरथ वक्त्रमण्डिकार्त्तः८ ॥ यः फेनं वमति विनम्यते च मध्ये सोद्वेगं विलपति चोर्ध्वमीक्षमाणः । ज्वर्येत प्रततमथो वसासगन्धिर्निःसंज्ञो भवति हि नैगमेयजुष्टः९ ॥ प्रस्तब्धो यः स्तनद्वेषी मुह्यते चाविश-न्मुहुः । तं बालं न चिराद्धन्ति ग्रहः सम्पूर्णलक्षणः ॥ विपरीतमतःसाध्यं चिकित्सेदचिरार्दितम् । गृहे पुरा-

चाहविनाभ्यञ्ज बालं शुचौ शुचिः ॥ सर्षपान् प्रकिरेत्तेषां तैलैर्दीपञ्च कारयेत् । सदासन्निहितश्चापि जुहुयाद्धव्यवाहनम् ॥ सर्वगन्धौषधीबीजैर्न्यमाल्येरलङ्कृतम् । अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति संचरन् ॥ नमः स्कन्दाय देवाय ग्रहाधिपतये नमः । शिरसा त्वाभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम् ॥ नीरुजो निर्विकारश्च शिशुर्मे जायतां ध्रुवम्” ॥

स्रोतूपत्तिकमन्यग्रहभेदा भा०व०२२९अ०उक्ताः यथा

“यावत् षोडश वर्षाणि भवन्ति तरुणाः प्रजाः । प्रबाधत मनुष्याणां तावद्रूपैः पृथग्विधैः । अहञ्च वः प्रदास्यामि रौद्रमात्मानमव्ययम् । परमं तेन सहिताः सुखं वत्स्यथ पूजिताः । मार्कण्डेय उवाच । ततः शरीरात् स्कन्दस्य पुरुषः पावकप्रभः । भोक्तुं प्रजाः स मर्त्यानां निष्पपात महाबलः । अपतत् सहसा भूमौ विसंज्ञोऽथ क्षुधार्दितः । स्कन्देन सोऽभ्यनुज्ञातो रौद्ररूपोऽभवद्ग्रहः । स्कन्दापस्मारमित्याहुर्ग्रहं तं द्विजसत्तमाः । । विनता तु महारौद्रः कथ्यते शकुनीग्रहः । पूतनां राक्षसीं प्राहुस्तं विद्यात् पूतनाग्रहम् । कष्टा दारुणरूपेण घोररूपा निशाचरी । पिशाची दारुणाकारा कथ्यते शीतपूतना । गर्भान् सा मानुषीणान्तु हरते घोरदर्शना । अदितिं रेवतीं प्राहुर्ग्रहस्तस्यास्तु रैवतः । सोऽपि बालान्महाघोरो बाधते वै महाग्रहः । दैत्यानां या दितिर्माता तामाहुर्मुखमण्डिकाम् । अत्यर्थं शिशुमांसेन संप्रहृष्टा दुरासदा । कुमाराश्च कुमार्य्यश्च ये प्रोक्ताः स्कन्दसम्भवाः । तेऽपि गर्भभुजः सर्वे कौरव्य ! सुमहाग्रहाः । तासामेव तु पत्नीनां पतयस्ते प्रकीर्त्तिताः । अज्ञायमाना गृह्णन्ति बालकान् रौद्रकर्म्मिणः । गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप ! । शकुनिस्तामथारुह्य सह भुङ्क्ते शिशून् भुवि । सरमा नाम या माता शुनां देवी जनाधिप ! । सापि गर्भान् समादत्ते मानुषीणां सदैव हि । पादपानाञ्च या माता करञ्जनिलया हि सा । वरदा सा हि सौम्या च नित्यं भूतानुकम्पिनी । करञ्जे तां नमस्यन्ति तस्मात् पुत्त्रार्थिनो नराः । इमे त्वष्टादशान्ये वै ग्रहा मांसमधुप्रियाः । द्विपञ्चरात्रं(१०)तिष्ठन्ति सततं सूतिकागृहे । कद्रुः सूक्ष्मवपुर्भूत्वा गर्भिणीं प्रविशत्यथ । भुङ्क्ते सा तत्र तं गर्भं सा तु नागं प्रसूयते । गन्धर्वाणाञ्च या माता सा गर्भं गृह्य गच्छति । ततो विलीनगर्भा सा मानुषी भुवि दृश्यते । या जनित्री त्वप्सरसां गर्भमास्ते प्रगृह्य सा । उपविष्टं ततो गर्भं कथयन्ति मनीषिणः । लोहितस्योदधेः कन्या धात्री स्कन्दस्य सा स्मृता । लोहितायनिरित्येवं कदम्बे सा हि पूज्यते । पुरुषेषु यथा रुद्रस्तथार्य्या प्रमदास्वपि । आर्य्या माता कुमारस्य पृथक्कामार्थमिज्यते । एवमेते कुमाराणां मया प्रोक्ता महाग्रहाः । यावत् षोडश वर्षाणि अशिवास्ते शिशून् प्रति । ये च मातृगणाः प्रोक्ताः पुरुषाश्चैव ये ग्रहाः । सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः । तेषां प्रशमनं कार्य्यं स्नानं धूपमथाञ्जनम् । बलिकर्मोपहारश्च स्कन्दस्येज्या विशेषतः । एवमभ्यर्चिताः सर्वे प्रयच्छन्ति शुभं नृणाम् । आयुर्वीर्य्यञ्च राजेन्द्र ! सम्यक्पूजानमस्कृताः । ऊर्द्ध्वन्तु षोडशाद्वर्षादये भवन्ति ग्रहा नृणाम् । तानहं संप्रवक्ष्यामि नमस्कृत्य महेश्वरम् । यः पश्यति नरो देवान् जाग्रद्वा शयितोऽपि वा । उन्माद्यति स तु क्षिप्रं तन्तु देवग्रहं विदुः । आसीनश्च शयानश्च यः पश्यति नरः पितॄन् । उन्माद्यति स तु क्षिप्रं स ज्ञेयस्तु पितृग्रहः । अवमन्यति यः सिद्धान् क्रुद्धाश्चापि शपन्ति यम् । उन्माद्यति स तु क्षिप्रं ज्ञेयः सिद्धग्रहस्तु सः । उपाघ्राति च यो गन्धान्रसांश्चापि पृथग्विधान् । उन्माद्यति स तु क्षिप्रं स ज्ञेयो राक्षसग्रहः । गन्धर्वाश्चापि यं दिव्याः संस्पृशन्ति नरं भुवि । उन्माद्यति स तु क्षिप्रं ग्रहो गान्धर्व एव सः । अधिरोहन्ति यं नित्यं पिशाचाः पुरुषं प्रति । उन्मादाति स तु क्षिप्रं ग्रहः पैशाच एव सः । आविशन्ति च यं यक्षाः पुरुषं कालपर्य्यये । उन्माद्यति स तु क्षिप्रं ज्ञेयो यक्षग्रहस्तु सः । यस्य दोषैः प्रकुपितं चित्तं मुह्यति देहिनः । उन्माद्यति स तु क्षिप्रं साधनं तस्य शास्त्रतः । वैक्लव्याच्च भयाच्चैव घोराणां चापि दर्शनात् । उन्माद्यति स तु क्षिप्रं सान्त्वं तस्य तु साधनम् । कश्चित् क्रीडितुकामो वै भोक्तुकामस्तथाऽपरः । अभिकामस्तथैवान्य इत्येष त्रिविधो ग्रहः । यावत् सप्ततिवर्षाणि भवन्त्येते ग्रहा नृणाम् । अतःपरं देहिनान्तु ग्रहतुल्यो भवेज्ज्वरः । अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम् । आस्तिकं श्रद्दधानञ्च वर्जयन्ति सदा ग्रहाः । इत्येष ते ग्रहोद्देशो मानुषाणां प्रकीर्त्तितः । न स्पृशन्ति ग्रहा भक्तान्नरान्देवे महेश्वरे” ।

नवम्‌ उध्यायादिकं गृहयागशब्दे वक्ष्यते। ग्रहकर्त्तादिदानं तद्गुणादिकञ्च तत्तद्ग्रहशब्दे उक्तं वक्ष्यमाणञ्च दृश्यम्। "उग्रस्य गृहपञ्चके" ति॰त॰ श्रीरामजन्मदिने "ग्रहैस्ततः पञ्चभिरुच्चसंस्थितैः" रघुः। गृह्यतेऽनेन करणे अप्। ६सोमादेर्ग्रहणपात्रे "दश ग्रहान् गृह्णाति" "ग्रहं समाप्य" श्रुतिः सोमादेर्ग्रहणसाधनपात्रनामानि च यागभेदेन भिन्नानि तानि "दश सोमग्रहान् गृह्णाति" इत्यादौ शत॰ब्रा॰ दर्शितानि। एवं यागभेदे ग्रहभेदाः तत्रोक्ता ज्ञेयाः। ७गृह्यतेऽनेन करणे अप्। ८घ्राणाद्यष्टके घ्राणादीनां ग्रहत्वम् बृ॰उ॰उक्तं यथा "याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहाः? इति अष्टौ ग्रहा अष्टावतिग्रहा इति ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे ते? इति। प्राणो१ वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धं जिघ्रति। वाग्२ वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति। जिह्वा३ वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान्विजानाति। चक्षु४र्वै ग्रहः स रूपेणातिग्राहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति। श्रोत्रं५ वै ग्रहः स शब्देनातिग्राहेण गृहीतः। श्रोत्रेण हि शब्दाञ्छृणोति। मनो६ वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान् कामयते। हस्तौ७ वै ग्रहः स कर्म्मणातिग्राहेण गृहीतो हस्ताभ्यां हि कर्म्म करोति। त्वग्८वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः" बृ॰उ॰।

"ये तेऽष्टौ ग्रहा अभिहिताः कतमे ते नियमेन ग्रहीतव्या इति तत्राह। प्राणो वै ग्रहः प्राण इति घ्राणमुच्यते। प्रकरणाद्वायुसहितः सोऽपानेनेति गन्धेनेत्येतदपानसचिवत्वादपानो गन्ध उच्यते। अपानोपहृतं हि गन्धम् घ्राणेन सर्व्वो लोको जिघ्रति। तदेतदुच्यते अपानेन हि गन्धान् जिघ्रतीति। वाग्वै ग्रहो वाचा ह्यध्यात्मपरिच्छिन्नया आसङ्गविषयास्पदया सत्याऽनृताऽसभ्यबीभत्सादिवचनेषु व्यापृतया गृहीतो लोकोऽपहृतः तेन वाक् ग्रहः स नाम्नातिग्राहेण गृहीतः स वागाख्यो ग्रहो नाम्ना वक्तव्येन विषयेणातिग्राहेणातिग्राहेणेति दैर्घ्यं छान्दसं, नाम वक्तव्यार्थो हि वाक्। तेन वक्तव्यार्थेन प्रयुक्ता वाक् तेन वशीकृता तेन तत्कार्य्यभक्त्या नैव तथा मोक्षः। अतो नाम्नातिग्राहेण गृहीता वागित्युच्यते वक्तव्यासङ्गेन हि ग्रहता वागनर्थैर्युज्यते। समानमन्यद्यते सकृत्पर्य्यन्ता अष्टौ ग्रहाः सर्व्वपर्य्यन्ताश्च एतेऽष्टावतिग्रहा इति" भा॰।

ग्रहकल्लोल पु॰ ग्रहेषु कल्लोल इव। राहौ त्रिका॰।

ग्रहकुष्माण्ड पु॰ कुष्माण्डि ग्रह–अच् कुष्माण्डभावाकारोऽस्त्यस्य अच् अर्श॰। महाकालानुचरे कुष्माण्डाकारे ह्यभेदे। "डाकिनी शाकिनी भूतप्रेता वेताल राक्षसाः। ग्रहताग्रहखेटाक्षा कामकर्णीपिशाचकाः। सर्व्वं प्रशममायान्ति शिवतीर्थजलार्पणात्" का॰ ख॰ ३३अ॰। अत्र ग्रह इति भिन्नं पदं न ग्रन्थे

ग्रहगणित न॰ ग्रहाणां तद्गत्यादीनां गणितं गणनं यत्र। त्रिस्कन्धज्योतिषान्तर्गते तन्त्ररूपे शास्त्रभेदे "ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम्" इत्युपक्रमे "स्कन्धेऽस्मिन् गणितेन या ग्रहगतस्तन्त्राभिधानं त्वसौ" मु॰ च॰ १अ॰। "ग्रहगणितहोरासंहिताहोरा ग्रन्थ थेता। तत्र ग्रहगणिते पौलिशरोमकवासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु" इत्येन तत्रैव तद्भेदा उक्ताः। तत्पाद्यविषयाश्च गणकशब्दे दर्शिततद्वाक्ये उक्तप्रायाः। सौरागमतिपाद्यविषयाश्च सि॰शि॰ सम्मता यथा। मध्यमाधिकारः कालमानम् भगोलः ग्रहस्फुटीकरणम्। ग्रहकक्षा प्रत्यब्दयुगः अधिमासादिस्फुटीकरणम्। त्रिप्रश्नाधिकारः। पर्व्वसम्भवः चन्द्रग्रहणम् सूर्य्यग्रहणम् ग्रहणच्छाया ग्रहोदयास्तनिर्णयः। शृङ्गोन्नतिः ग्रहयुतिः भग्रहयुतिः पाताधिकारः। एषां च विशेषस्तत्तच्छब्दे उक्तो वक्ष्यते च।

ग्रहगोचर पु॰ ६त॰। ग्रहाणां जन्मराशितः स्थानभेदेन शुभाशुभसूचके गतिभेदे। गोचरशब्दे उक्तप्रायोऽपि विशेषोऽत्र निर्णीयते यथा बृ॰सं॰१०४अ॰। तत्र ये श्लोकायश्छन्दस्तन्नामापि तत्र भङ्ग्योक्तं द्रष्टव्यम्

"प्रायेण गोचरा व्यवहार्य्यास्तत्फलानि वक्ष्यामि।
नानावृत्तैस्तानि सुखचपलत्वं जन्मवार्य्यैः। श्रीमहाकवि
गिरं श्रुत्वा न मदीया रोचतेऽथवा नैवम्। साध्वी
तथा न पुंसां प्रिया यथा स्यादनवचपला।
सूर्य्यः षट्त्रिदशस्थस्त्रिदशषट्सप्ताद्यगश्चन्द्रमा जीवः सप्तनवद्विपञ्चमगतो वक्रार्कजौ षट्त्रिगौ। सौम्यः षड्द्विचतुर्दशाष्टमगतः सर्व्वेऽप्युपान्त्ये शुभाः शुक्रः सप्तनवर्क्षदशवर्ज्जितः शार्दूलवत्त्रासकृत्।

वामवेधेन शुभः"। वामवेधश्च दूरनक्षत्रेति एतत्प्रेति वक्ष्यमाणवचनाभ्यामेकार्थत्वाद्बोध्यम्। "उपचयकर-युक्तः सव्यगः शुक्रश्च शुभमभिलषमाणः सौम्यमध्य-स्थितो वा। सखितां शत्रुगृहः कारकोऽपि चेन्दुर्जय-धनसुखदाता तत्रगृहेऽन्यथा तु"। सव्यग उक्तापसव्य-चारी। उपचयकरस्य पश्चाद्वर्त्ती वा फलयोगकृत्। "भार्गो यथा लक्ष्मीनक्षत्रेण पश्चाद्भागां यदि वा शशाङ्कः। शुभपदानां शुभदः प्रयाणे याम्येन यातीन शुभः शशाङ्कः। योयस्य दशमगृहगः स तस्य पश्यो भवति नियमेन। स्वर्भानुश्च नवलक्षोपगाः कण्टकेषु यावन्त आस्थिताः। जन्मकालवशगास्ते तु कारकाः कर्मगास्तु तेषां विशेषतः। सितपक्षादौ चन्द्रे शुभे शुभं पक्ष-मशुभमशुभे च। कृष्णे गोचरशुद्धेन शुभः पक्षः शुभोऽतोऽन्यः"। भीमपराक्रमे। "शुक्ले पक्षे प्रतिपदि चन्द्रे शिवे धियं पक्षम्। कृष्णे प्रतिपदि ताराशुद्धौ शुभं विदुः पक्षम्"। ग्रहैस्तदात्मत्वैव

"मार्कण्डेय पुराणम् "द्रव्ये गच्छेषु भृत्येषु सुहृत्सु तनयेषु च। भार्यायाञ्च गृहे दुष्टे भयं पुण्यवतां नृणाम्। आत्मन्यथाल्पपुण्यानां सर्वत्रैवातिपापिनाम्। न कुत्रापि हापापानां नराणां जायते भयम्"।

ग्रहगति स्त्री ६त०। गृहाणां प्रत्यहं भोगगमनभेदे। तत्र ग्रहगति शब्दे २४१४ पृ० ग्रहगतमंदावतत् कारणा-दिकं च दर्शितम्। तत्र गृहाणां सायन दिनगतिमान सि०शि० उक्तं तच्च खगोलशब्दे २४२२पृ० उक्तं।यमपि विशेषोऽत्रोच्यते। तत्र गृहाणां दिनगतिसाधनं सि०शि० उक्तं यथा

"मन्दोन्मितादङ्गणपात् फलानि यानि तत्कनाः। भवन्ति मध्यमाः क्रमाद्भमःसदां द्युभुक्तयः। समा गतिस्तु योजनैर्नभःसदां सदा भवेत्। कलादिकल्पनावशान्मृदु-द्रुता च सा स्मृता" सि०शि०।

"अत्रोपपत्तिस्त्रैराशिकेन। पूर्वं गतियोजनात्मिका ग्रहाणां तुल्योक्ता। इदानीमतुल्या। सा कलादि-कल्पनावशात्। इदानीमतुल्यत्वे कारणमाह"प्रमिता० "कक्षाः सर्वा अपि दिविषदां चक्रलिप्ताङ्किताःस्ता वृत्ते लघ्व्यो लघुनि महति स्युर्महत्यश्च लिप्ताः। तस्मादेते शशिबुधसितादित्यभौमेज्यमन्दा मन्दाक्रान्ता इव शश-धराद्यान्ति यान्तः क्रमेण" सि०शि०।

"अतः सर्वा अपि कक्षाचक्र२१६००। लिप्ताभिरेवाङ्किताः अतो महति वृत्ते महत्यो लिप्ताः स्युः। लघुनि लघ्व्यः। तद्यथा चन्द्रकक्षा सर्वाःस्वल्पा लघुः। तस्यामेका कला पञ्चदशभिर्योजनैर्भवति। शनेः कक्षा सर्वतोऽधिका सा महती। तस्यामेका कला योजनानां षड्भिः सहस्रै-रेकसप्तत्योने ५८२८ भवति। योजनं चतुःक्रोशमेव। अतश्चन्द्रात् प्रकाशाद्बुधोर्ध्वं स्था बुधशुक्रादयः क्रमेण मन्दाक्रान्ता मन्दगतय इव भान्ति। मन्दाक्रान्ताख-न्दोऽपि सूचितम्" प्रमिता०। स्फुटगतिमाह

"इतान्तरसंस्थलगान्तरं स्याद्गतिः स्फुटा तस्य नयान्तराले। कोटौ फलघ्नी मृदुकेन्द्रभुक्तिस्त्रिज्योद्धृता कर्किमृगादिकेन्द्रे। तया युतोना ग्रहमध्यभुक्तिस्ता-त्कालिकी केन्द्रपरिस्फुटा स्यात्। समीपतिथ्यन्तसमीप-चालनं विधौ तु तत्कालजयैव युज्यते। मृदुर्गमं चालन-माद्यया यतः प्रतिक्षणं सा न समा मतप्यतः"सि०शि०

"अद्यतनश्वस्तनस्फुटग्रहयोरौदयिकयोर्दिनार्द्धजयोर्वा तात्कालिकयोर्वा यदन्तरं कलादिकं सा स्फुटा गतिः। अद्यतनात् श्वस्तने न्यूने वक्रा गतिर्ज्ञेया। तस्मद्यान्त-राल इति। तस्य कालस्य मध्येऽनया गत्या गृहश्चा-लयितुं युज्यत इति। इयं किल स्थूला गतिः। अथ सूक्ष्मा तात्कालिकी कथ्यते। तत्र गत्यूना चन्द्रगतिः। अन्येषां ग्रहाणां गृहगतिरेव केन्द्रगतिः। मृदु-केन्द्रकोटिफलं कृत्वा तेन केन्द्रगतिर्गुण्या त्रिज्यया भाज्या लब्धेन कर्क्यादिकेन्द्रे ग्रहगतिर्युता कार्या। मृगादौ तु रहिता कार्या। एवं तात्कालिकी मन्द-परिस्फुटा स्यात्। तात्कालिकया भुक्त्या चन्द्रस्य विशिष्टं प्रयोजनम् तदाह। समीपतिथ्यन्तसमीप-चालनमिति। यत्कालिकचन्द्रस्तस्मात् कालाद्गतो वा गम्यो वा यदासन्नस्तिथ्यन्तस्तदा तात्कालिकया गत्या तिथिसाधनं कर्तुं युज्यते। तथा समीपचालनं च। यदा तु दूरतरस्तिथ्यन्तो दूरचालनं वा चन्द्रस्य तदा-द्यया स्थूलया कर्तुं युज्यते स्थूलकालत्वात्। यतश्चन्द्रगतिर्महत्त्वात् प्रतिक्षणं समा न भवति। अतस्तदर्थमयं विशेषोऽभिहितः। अथ गतिफ-लवासना। अद्यतनश्वस्तनगृहयोरन्तरं गतिः। अत एव गृहफलयोरन्तरं गतिफलं भवितुमर्हति। अथ तत्साधनम्। अद्यतनश्वस्तनकेन्द्रयोरन्तरं केन्द्रगतिः। भुजज्याकरणे यद्दोर्ज्याखण्डं तेन सा गुणया शरहि-दस्र२२५भाज्या। तत्र तावत् तात्कालिकभोग्यखण्ड-

करणायानुपातः। यदि त्रिज्यातुल्यया कोटिज्यया आद्यं भोग्यखण्डं शरहिदसतुल्यं लभ्यते तदेष्टया किमित्यत्र कोटिज्यायाः शरहिदङ्का २२५ गुणस्त्रिज्या हरः। फलं तात्कालिकं स्फुटभोग्यखण्डं तेन केन्द्रगतिर्गुण्या शरहिदङ्कैर्भाज्या। अत्र शरहिदङ्कमितयोर्गुणकभाजकयोस्तुल्यत्वान्नाशे कृते केन्द्रगतेः कोटिज्या गुणस्त्रिज्या हरः स्यात्। फलमद्यतनकेन्द्रदोर्ज्ययान्तरं भवति। तत्फलकरणार्थं स्वपरिधिना गुण्यं भांशै ३६० र्भाज्यम्। पूर्वं किल गुणकः कोटिज्या वा यावत् परिधिना गुण्यते भांशै ३६० र्ह्रियते तावत् कोटिफलं जायत इत्युपपन्नं कोटी फलघ्नी मृदुकेन्द्रभुक्तिरित्यादि। एवमद्यतनश्वस्तनग्रहफलयोरन्तरं तद्गतेः फलं कर्क्यादिकेन्द्रे ग्रहर्णफलस्यापचीयमानत्वात् तुलादौ धनफलस्योपचीयमानत्वाद्धनम्। मकरादौ तु धनफलस्यापचीयमानत्वान्मेषादावृणफलस्योपचीयमानत्वादृणमित्युपपन्नम्” प्रमिता०।

ग्रहगन्ध पु० ६त०। ग्रहयज्ञशब्दे वक्ष्यमाणे सूर्याद्युद्देशेन देये रक्तचन्दनादौ।

ग्रहचिन्तक पु० ग्रहान् शुभाशुभदायकतया चिन्तयति चिन्ति–ण्वुल् ६त०। दैवज्ञे सांवत्सरिके। “यत्नाच्छुभमिष्टं जगतोऽशुभं वा शास्त्रोपदेशाद् ग्रहचिन्तकेन” वृ० स० २४अ०।

ग्रहण न० ग्रह–भावे ल्युट्। १स्वीकारे २ज्ञाने। ३आदरे ४उपरागे चन्द्रसूर्ययोः राहुणा ग्रसने करणे ल्युट्। ५करे मेदि०। ६इन्द्रिये राजनि०। ७शब्दे जटा०। तत्र करस्य ग्रहणसाधनत्वात् इन्द्रियाणां शब्दस्य च ज्ञानसाधनत्वात् तथात्वम्। उपरागस्य यथा राहुकृतत्वं तथा उपरागशब्दे १२११पृ० उक्तम्।

“चक्षुषा दर्शनं राहोर्यत्तद्ग्रहणमुच्यते” संवत्सरप्रदीपः। तत्रातुरस्यापि स्नानमाह “आदित्यकिरणैः पूतं पुनः पूतञ्च वह्निना। जलं, व्याध्यातुरः स्नायात् ग्रहणेऽप्युष्णवारिणा” व्यासः। तत्र सर्वजलस्य गाङ्गतुल्यतामाह व्यासः “सर्वं भूमिसमं दानं सर्वे व्याससमा द्विजाः। सर्वं गङ्गासमं तोयं ग्रहणे नात्र संशयः”। तत्र श्राद्धस्यावश्यकतामाह शाता०। “सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने। अकुर्वाणस्तु तत् श्राद्धं पङ्के गौरिव सीदति”। तत्रामान्नेन श्राद्धमाह प्रचेताः “आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा। आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि”। आमश्राद्धेऽपि विशेषो योगिनीतन्त्रे “निरन्नेरामश्राद्धे तु अन्नं न चालयेत् क्वचित्। इष्टौ तु चालयेदन्नं संक्रमे ग्रहणेषु च”। ग्रहणश्राद्धादिकं मलमासेऽपि कार्यं यथाह कालमा० स्मृतिः “चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम्। कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा”। तत्र दीक्षायां नैव कालादिशुद्ध्यपेक्षा “सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः। मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत्” सारसंग्रहः। तत्र वारभेदे गुणाधिक्यम् “चन्द्रग्रहश्चन्द्रवारे रवौ सूर्यग्रहस्तथा। चूडामणिरयं योगस्तत्रानन्तफलं स्मृतम्। अन्यस्मादुग्रहणात् कोटिगुणमत्र फलं लभेत्” गरु०पु०। अत्र पुरश्चरणप्रकारः “अथ वान्यप्रकारेण पुरश्चरणमिष्यते। ग्रहणेऽर्कस्य चेन्द्वोर्वा शुचिः पूर्वमुपोषितः। नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः। यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः। ग्रहणादि विमोक्षान्तं जपेन्मन्त्रं समाहितः। अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत्। तदन्ते महतीं पूजां कुर्याद्ब्राह्मणतर्पणम्। ततो मन्त्रस्य सिद्ध्यर्थं गुरुं संपूज्य तोषयेत्। एवञ्च मन्त्रसिद्धिः स्याद्देवता च प्रसीदति”। ति०त० पुरश्चरणच०। तत्र स्नानस्यावश्यकतामाह वृहद्वसिष्ठः “संक्रमे ग्रहणे चैव न स्नायाद्यस्तु मानवः। सप्तजन्मसु कुष्ठी स्याद् दुःखभागी च सर्वदा” जननाशौचेऽपि साङ्गस्नानमात्रं कार्यं यथाह स्मृतिः। “सूतके मृतके चैव न दोषो राहुदर्शने। स्नानमात्रन्तु कर्त्तव्यं दानश्राद्धविवर्जितम्”। अत्र मृताशौचं नास्ति यथोक्तम् “चन्द्रसूर्यग्रहे चैव मृतानां पिण्डकर्माणि। महातीर्थे तु संप्राप्ते सूतदोषो न विद्यते” भविष्यपु०।

तत्र ज्ञाने “भार्यात्वसंपादकं ग्रहणं विवाहः” उद्वा०त० रघु०। “मतएव सतां परार्थता ग्रहणानां हि यथा यथार्थता” नैष०। आदाने “पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्” उ० त० स्मृतिः। “आचारधूमग्रहणात् बभूव” रघुः “स बाहुशतसंख्यस्य सर्वास्त्रग्रहणं रणे” हरिवं०४६अ०। अर्थवद्ग्रहणेनानर्थकस्य” “अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ति” व्या० परिभाषा।

ग्रहणक न० गृह्यतेऽनेन ग्रह–करणे ल्युट्, ततः स्वार्थे क। ग्राहके शास्त्रे। “इकारादीनामपि ग्रहणकशास्त्रबलात्

"ग्रहत्वं स्यात्" शि॰कौ॰। शब्देन्दुशेखरे तु ग्रहणकेत्यत्र गाहकेति पाठः।

**ग्रह(णि)णी** स्त्री ग्टह्णाति रोगिणो देहम् ग्रह—अनि वा ङीप्। १पित्तधराख्ये कलाभेदे २तदाश्रिते रोगभेदे प्रवाहिकायां च तद्रोगस्याननिदानाद्युक्तं सुश्रुते यथा "दुष्यन्ति ग्रहणी जन्तोरग्निसादनहेतुभिः। अतिसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः। भूयः सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत्। तस्मात्कार्य्यः परीहारस्त्वतीसारे विरिक्तवत्। यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा। षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता। पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता। ग्रहण्यां बलमग्निर्हि स चापि ग्रहणीश्रितः। तस्मात् संदूषिते वह्नौ ग्रहणी सम्प्रदुष्यति। एकशः सर्वशश्चैव दोषैरत्यर्थमूर्च्छितैः। सा दुष्टा बहुशोभुक्तमाममेव विमुञ्चति। पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम्। ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः। तस्योत्पत्तौ विदाहप्रसेकालस्यतृट्क्लमाः। बलक्षयोऽरुचिः कासः कर्णक्ष्वेडान्त्रकूजनम्। अथ जाते भवेज्जन्तुः शूनपादकरः कृशः। पर्व्वरुग्लौल्यतृट्छर्दिज्वरारोचकदाहवान्। उद्गिरेच्छुक्ततिक्ताम्ललोहधूमामगन्धिकम्। प्रसेकमुखवैरस्यतमकारुचिपीडितः। वाताच्छूलाधिकैः पायुहृत्पार्श्वोदरमस्तकैः। पित्तात् सदाहैर्गुरुभिः कफात्त्रिभिस्त्रिलक्षणैः। दोषवर्णैर्नखैस्तद्वद्विण्मूत्रनयनाननैः। हृत्पाण्डूदरगुल्मार्शःप्लीहाशङ्की च मानवः"। "नानाविधद्रव्यचौरो जायते ग्रहणीयुतः" शाता॰। तस्याः कर्मभेदविपाकतोक्ता। तस्या महारोगत्वमदाद्यशब्दे उक्तम् "वृद्धस्य ग्रहणीरोगो नाप्टहीत्वा निवर्त्तते" वैद्य॰।

**ग्रहणीहर** न॰ ग्रहणीं हरति हृ—अच्। १लवङ्गे शब्दच॰ २ग्रहणीहारके औषधादौ त्रि॰।

**ग्रहदक्षिणा।** पु॰ ग्रहाणां ग्रहोद्देशेन देया दक्षिणा। ग्रहोद्देशेन ग्रहयज्ञे देयधेन्वादिदक्षिणायाम् गृह्ययज्ञशब्दे विवृतिः।

**ग्रहदान** पु॰ ६त॰। ग्रहोद्देशेन तदशुभशान्त्यै दानम्। ग्रहाशुभनिवारणार्थं देये द्रव्यभेदे गोचरशब्दे ग्रहगोचरशब्दे ग्रहविप्रशब्दे च तद्विवृतिः।

**ग्रहदृष्टि** स्त्री। ६त॰। ग्रहाणां स्वस्थानापेक्षया स्थानभेदेषु दर्शनभेदे सा च वृहज्जातके तट्टीकायां चोक्ता यथा "त्रिदशत्रिकोणचतुरस्रसप्तमान्यवलोकयन्ति चरणाभिवृद्धितः। रविजामरेज्यरुधिराः परे च ये क्रमशो भवन्ति किल वीक्षणेऽधिकाः" वृहज्जा॰। "यस्मिन् स्थाने खेटाः स्थितास्तस्मात्त्रिदशादीनि स्थानानि चरणाभिवृद्धितः पाददृष्ट्यावलोकयन्ति खेटो यस्मिन् राशौ व्यवस्थितः तस्माद्यस्तृतीयगः खेटो दशमगतश्च तौ तृतीयदशमराशी च पादेन चतुर्भागदृष्ट्यावलोकयति एवं त्रिकोणस्थौ नवपञ्चमस्थानगतावर्द्धदृष्ट्या, चतुरस्रेऽष्टमचतुर्थे अष्टमचतुर्थस्थानस्थौ पादहीनदृष्ट्या सप्तमगे खेटं परिपूर्णदृष्ट्या। चरणाभिवृद्धित इत्यत्राभिशब्दो वीप्सां द्योतयति चरणचरणवृद्ध्या पादपादवृद्ध्येत्यर्थः। यावत्पाददृष्ट्या पश्यन्ति तावत् फलं प्रयच्छन्ति तथा च स्वल्पजातके "दशमतृतीये नवमपञ्चमे चतुर्थाष्टमे कलत्रं च। पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति"। अथैव खेटा उक्तस्थानानि पश्यन्तीति तथा च सारावल्याम् "सर्वं पश्यति सदा खगाश्चरणवृद्धितः सर्वे। त्रिदशत्रिकोणचतुरस्रसप्तमगतान् फलं क्रमेणैव। पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः। चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं च"। तथा यवनेश्वरः" द्वौ पश्चिमौ ११।१२। प्रथमञ्च द्वितीयं संस्थानराशेः परिहृत्य राशिम्। शेषान् क्रमः पश्यति सर्वकालमिष्टेषु चैषां विहिता हगिष्टा। जामित्रभे दृष्टिफलं समस्तं सपादहीनं चतुरस्रयोश्च। त्रिकोणयोर्दृष्टिफलार्द्धमाहुर्दुश्चिक्यसंज्ञे दशमे च पादम्"। रविजामरेज्यरुधिरा इति। किलेत्यागमसूचने चरणाभिवृद्धित इत्यनुवर्त्तते एते रविजादयश्चरणाभिवृद्धितः पादोपचयाद्वीक्षणे दर्शने क्रमशोऽधिकफलप्रदा भवन्ति रविजः सौरिः स दर्शने पादफलप्रदः, अमरेज्यो वृहस्पतिरर्द्धफलप्रदः रुधिरोऽङ्गारकः स पादहीनफलप्रदः। अपरेऽर्कचन्द्रबुधशुक्रास्ते वीक्षणे समस्तफलप्रदाः। एतन्नैसर्गिकं ग्रहाणां दृष्टिफलम्। स्थानवशादेतेषां यथास्वं दृष्टिफलमूह्यम् एवमेके व्याचक्षते। अपरे तु आहुः स्थानफलमेतत् तेन त्रिदशादिस्थानगतान् ग्रहराशीन् पश्यन्तो रविजादयो दर्शनेऽधिकफलप्रदा भवन्ति तद्यथा तृतीयदशमस्थान् ग्रहान् राशीन् वा शनैश्चरः पश्यन्नन्येभ्यो ग्रहेभ्योऽधिकफलप्रदो भवति परिपूर्णं पश्यन्तीत्यर्थः। एवं त्रिकोणस्थान् जीवः, चतुरस्रगान् भौमः, सप्तमस्थान् परे सूर्यचन्द्रबुधशुक्राः। एतच्च बहुतराचार्याणां मतम्। तथा च भगवान्

श्रवः पूर्वदेशो विनश्यति । अश्लेषा च मघापूर्वफाल्गुन्याग्नेयगोचरे । अङ्गवङ्गौ कलिङ्गश्च पूर्वजाश्चैव कोशलाः । डाहलो जयहन्ता च तथैव च सुलक्षिका । उड्डीयानं वराटश्च अग्निदेशो विनश्यति । उत्तरा हस्तचित्रा च दक्षिणं कुक्षिमाश्रिताः । दर्दुरश्च महेन्द्रश्च वनवासश्च सिंहलः । तापी भीमरथी लङ्का त्रिकूटं मलयस्तथा । श्रीपर्वतः किष्किन्ध्या इति नश्यति दक्षिणः । स्वाती विशाखा मैत्रं च कूर्मनैरृत्यगोचरे । नासिक्यं च सुराष्ट्रं चोत्तरमालवकं तथा । बाह्लीकं च प्रकाशश्च भृगुकच्छश्च कोङ्कणम् । खेटापुरं च मौटेरं देशा नश्यन्ति चेदृशाः । ज्येष्ठा मूलं तथाषाढा पुच्छे कूर्मस्य संस्थिताः । पारावतं मरुकच्छमवन्ती पूर्वमालवः । पारातवर्वरद्वीपं सौराष्ट्रं सैन्धवं तथा । जनस्थानं विनश्यन्ति स्त्रीराज्यं पुच्छपीडने । उत्तरादित्रिऋक्षाणि पादे वायव्यगोचरे । गुर्ज्जरं तङ्कणश्चैव मरुदेशं सरस्वतीम् । जालन्धरं वराटं च पालुकोदधिसंयुतम् । मरुभट्टं विनश्यन्ति ये चान्ये कोणसंस्थिताः । शतभिषादित्रयश्चैव उत्तरं कुक्षिमाश्रितम् । नेपालं कीरकाश्मीरोरगञ्जन खुरमानकम् । माथुरं म्लेच्छदेशाश्च ससकेदारमण्डले । कुक्ष्याश्रया विनश्यन्ति ये देशाश्चोत्तराश्रयाः । रेवती चाश्विनी याम्यं२ पादे त्वीशानगोचरे । गङ्गाद्वारं कुरुक्षेत्रं श्रीकण्ठं हस्तिनापुरम् । अश्ववक्त्रकपाटाश्च गजकर्णास्तथैव च । विनश्यन्ति च ते सर्वे देशा ऐशानगोचरे । सौरिः स्वदेशगो यत्र तत्र यत्नेन चिन्तयेत् । परदेशस्थितः कुर्याद्विग्रहं पृथिवीपतेः । यत्रस्थः पीडयेत्तत्र वेधस्थाने तथैव च । देशनामर्क्षगः सौरिर्भङ्गदो नात्र संशयः । १पृथ्वीकूर्मं समालिख्य कृत्तिकादि यमान्तकम् । देशादिस्वस्वऋक्षादि वक्ष्ये कूर्मचतुष्टयम् । पूर्ववच्चक्रमालिख्य देशनामर्क्षपूर्वकम् । २देशकूर्मो भवेत्तत्र यत्र सौरिस्थितस्तथा । नगरे ३नागरस्यर्क्षं कृत्वा लेख्यं तु पूर्ववत् । सौरिस्थाने भवेद्दुःखं वेधस्थाने तथैव च । ४क्षेत्रजे क्षेत्रभाद्यन्तं कृत्वा कूर्मं यथास्थितम् । सौरिस्थाने तथा वेधे जायतेऽत्र मदद्वयम् । ५गृहकूर्मं समालिख्य गृहद्वारसुखस्थितम् । स्वाम्यर्क्षपूर्वकं कृत्वा ततो वीक्ष्य शुभाशुभम् । गृहमध्यस्थितः सौरिः शोकसन्तापदायकः । द्वारे विघ्नप्रदो ज्ञेयः पावके वह्निदायकः । ज्ञेयो मृत्युप्रदो याम्ये राक्षसे राक्षसाद्भयम् । वारुणे शुभदो ज्ञेयो वायव्ये धनदायकः । अर्थलाभप्रदः सौम्ये शाङ्करे सर्वसिद्धिदः । सौरिर्बलाधिको दुष्टः स्वल्पवीर्यः शुभावहः । समकालं पीडयेद्यत् भानुजः कूर्मपञ्चकम् । तत्र स्थाने महायुद्धं जायते नात्र संशयः । दुष्टस्थाने गते चन्द्रे कर्त्तव्यन्तत्र शान्तिकम् । यदुक्तं यामले तन्त्रे सर्वविघ्नविनाशकम् । यन्दृष्ट्वैव पश्यन्ति राहुभौमशनैश्चराः । परचक्रभयं चाग्निर्दुर्भिक्षन्तत्र दारुणम् । कूर्मचक्रं महाचक्रं कथितश्चादियामले । त्रिकालविषयज्ञानं प्राणिस्थं येन जायते" ।

तन्त्रोक्तं मन्त्रग्रहणतत्साधनोपयोगिकूर्म्मचक्रं तु कूर्म्मचक्रशब्दे दृष्टे उक्तं तत्र दृश्यम् ।"

७ पद्मचक्रम्—"पद्माकारं लिखेच्चक्रमष्टपत्रं सुशोभनम् । कोष्ठकं नवमं मध्ये पद्मचक्रं प्रजायते । कृत्तिकादीनि भान्यत्र त्रीणि त्रीणि यथाक्रमम् । मध्यकोष्ठादि रुद्रान्तं सप्तविंशतिसंख्यया । नव खण्डा धरा सा च नवभागेषु संस्थिता । यत्र खण्डे स्थितः सौरिः खण्डं तच्च विनश्यति"

८ फणीश्वरचक्रम्—"कृत्तिकाद्यं लिखेच्चक्रं सर्पाकारं फणीश्वरम् । सप्तनाडीसमायुक्तं सौरिवेधं विलोकयेत् । नाड्येकैकसमायोगे जम्बूद्वीपादि गण्यते । सप्त द्वीपाः क्रमेणैव पीड्यन्ते सौरिपीडया । जम्बुः प्लक्षस्तथा शाकः कुशः क्रौञ्चश्च शाल्मलिः । सप्तमः पुष्करद्वीपः पीड्यन्ते सौरिपीडया" । कालानलचक्राणि सप्त

९ राहुकालानलचक्रम्—(२)"अथातः संप्रवक्ष्यामि प्रोक्ता या ब्रह्मयामले । राहुकालानली याता सद्यःप्रत्ययकारणम् । ग्रहयोगवशाद्याता ज्योतिःशास्त्रे प्रभाषिता । या सा शुभेषु कार्य्येषु फलदा न तु सङ्गरे । यस्य छायाप्रभावेण छाद्येते शशिभास्करौ । तस्य राहोः प्रभावश्च वच्मेऽहं रणकर्म्मणि । केचित् मूढा वदन्त्येवं ग्रहो राहुरकारणम् । यतो वर्षे दिने लग्नेष्वाधिपत्यं न दृश्यते । आधिपत्ये स्थिता ये च वर्षे मासे दिवानिशोः । ते चाधिकारिणो ज्ञेया राहू राजाऽभिधीयते । वेदागमपुराणेषु विख्यातो राहुखेचरः । तस्य माहात्म्यमज्ञात्वा मिथ्या जल्पति स्वल्पवित् । दुष्टारिष्टेषु सर्वेषु जातकादिषु मन्यते । सद्यः प्रत्ययदो राहुः स कथं स्यादकारणम् । भ्रमंश्च कालरूपेण संहारेण महीतले । स्वच्छन्दद्रष्टया रौद्रो ज्ञेयो राहुर्न संशयः । ग्रहा व्यासभयाद् यस्य दृष्टिमार्गे भ्रमन्ति च । तस्य नामाग्रहं वक्ष्ये दृष्टं पुच्छं क्रमेण च । राहुरगुस्तमः

पातः स्वर्भानुः सिंहिकासुतः। दैत्यश्छाया शिरोवक्त्रं चक्रारिश्च विधुन्तुदः। पुच्छं केतुः शिखी सर्पो गुदं गुह्यं घटोमतम्। उत्पातो विषगर्भश्च धूम्रकालः च्यहान्तकः। कक्षाधारगतोराहुः सर्पकपेण संस्थितः। तस्य चक्रं प्रवक्ष्यामि राहुकालानलाख्यकम्। शलाकासप्तकं चक्रं सौम्यादौ कृत्तिकादिकम्। साभिजित् सर्वमालिख्य अष्टाविंशतितारकाः। यत्र ऋक्षस्थितोराहुर्वदनं तद्विनिर्दिशेत्। मुखात् पञ्चदशे ऋक्षे पुच्छं तस्य व्यवस्थितम्। एकोत्तरशतं ख्याताः जायन्ते तत्र केतवः। व्याप्नुवन्तो जगत्सर्वं सहस्राकसमत्विषः। राहुभुक्तानि ऋक्षाणि जीवपक्षे त्रयोदश। त्रयोदशाऽपि भोग्यानि मृतपक्षः प्रकीर्त्तितः। मृतपक्षे मुखन्तस्य गुदं जीवाङ्कमध्यगम्। एवमङ्गद्वयं राहोर्ज्ञातव्यं स्वरवेदिभिः। जीवपक्षे क्षपानाथे मृतपक्षे रवौ स्थिते। तस्मिन् काले शुभा यात्रा विपरीता तु हानिदा। चन्द्रादित्यौ यदा युक्तौ जीवपक्षव्यवस्थितौ। तत्र क्षेमं जयो लाभो यात्राकाले न संशयः। मृतपक्षे यदा काले संस्थितौ चन्द्रभास्करौ। तदा हानिर्भयं भङ्गोमृत्युर्यात्राफलं मतम्। जीवपक्षस्थिते चन्द्रे कार्य्यं स्यादमृतोपमम्। मृतपक्षे मृतं ज्ञेयं यतश्चन्द्रबलात् बलम्” तत्राङ्गभेदेन फलभेद उक्तस्तत्

राहुषडङ्गविभागचक्रम्—“अतः षडङ्गभेदेन राहुचक्रं वदाम्यहम्। मुखं हृदुदरं गुह्यं पुच्छं मस्तकमेव च। मुखैकं हृदये सप्त षड्ऋक्षाणि तथोदरे। ऋक्षैकं गुह्यगं तस्य षट् पुच्छे

“मुखाद्यङ्गनामभेदः सप्तमस्तके मुखाद्यङ्गस्य नामानि फलं चास्य वदाम्यहम्। यथोत्तरं क्रमेणैव चन्द्रार्कभ्रमणेन च। यत्र ऋक्षे स्थितो राहुस्तस्याभिधानमीरितम्। गिलितं कर्त्तरी जिह्वा चन्द्राङ्कं वदनं तथा। राहुधिष्ण्याग्रतः सप्त भुक्तधिष्ण्यानि यानि च। तानि सम्पुटसंज्ञानि कामाङ्कं हृदयन्तथा। हृदयाग्रे स्थितायाश्च तारका रससंख्यया। कामाङ्कं जठरं जीवं सम्पुटोदरसंज्ञकम्। तत्पुरोयत्तु नक्षत्रमेकं पञ्चदशं मुखात्। गुदन्तद्गिलितं गुह्यं केतुश्चन्द्राङ्ककर्त्तरी। गुदधिष्ण्याग्रतोयानि धिष्ण्यानि रससंख्यया। पुच्छं सूर्य्याङ्कवज्राङ्कपुष्टिमृत्युस्तथैव च। शेषाणि सप्त भान्यत्र मध्यस्थान्यस्य पुच्छयोः। कपालं मस्तकं शीर्षं रुद्राङ्कं भोगिमण्डलम्। स्थिरकपी स्थितोभानुश्चरकपश्चन्द्रमाः। क्रमेणैकैकशोऽङ्गानां योगषट्कं वदाम्यहम्।

मुखादियोगषट्कम्—“राहुवक्त्रे स्थिते सूर्य्ये चन्द्रे हृदयसंस्थिते। यायिनो विजयस्तत्र स्थायिनो भङ्ग आहवे। मुखाग्रसंस्थिते सूर्य्ये चन्द्रे चोदरगे तथा। अत्र यायी जयेद्युद्धे हेलया नात्र संशयः। भास्करे गिलिताङ्कस्थे चन्द्रे वज्राङ्कसंस्थिते। स्थायी भङ्गमवाप्नोति यायी जयति सत्वतः। राहुऋक्षस्थितो भानुश्चन्द्रे पुच्छाङ्कसंस्थिते। स्थायिनोविजयोयुद्धे यायिनो मृत्युमादिशेत्। राहुजिह्वां गते सूर्य्ये चन्द्रे रुद्राङ्कसंस्थिते। बलापतौ भवेत्तत्र सैन्ययोरुभयोरपि। राहुऋक्षस्थितोभानुश्चन्द्रस्तत्रैव संस्थितः। न कश्चिज्जयमाप्नोति सैन्ययोरुभयोःक्षयः”।

हृदयादियोगषट्कम्। “हृदयस्थे दिवानाथे जठरस्थे निशाकरे। निर्द्दिष्टः स्थायिनोमृत्युर्यायी जयति निर्व्रणः। हृदयस्थो यदा भानुः शशाङ्कोगुदमाश्रितः। हेलया जयते यायी स्थायी च म्रियते रणे। कामाङ्के दिवानाथे पुच्छषट्के निशाकरे। स्थायिनो विजयस्तत्र यायिनश्च पराजयः। सम्पुटस्थो यदादित्यो रुद्राङ्के चन्द्रमा स्थितः। यायी च भङ्गमायाति किञ्चित्स्थायी जयी रणे। कामाङ्कं याति चेत् भानुश्चन्द्रे राहुमुखस्थिते। संग्रामे विजयी यायी, स्थायिनो भङ्गमादिशेत्। हृदयाङ्के यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ। देवानपि जयेत् यायी किंपुनर्मानवं बलम्”।

उदरादियोगषट्कम्—“उदरस्थे दिवानाथे निशानाथे गुदस्थिते। समयुद्धं भवेत्तत्र किञ्चित् यायी जयी रणे। सम्पुटस्थो यदा भानुः पुच्छे भवति चन्द्रमाः। यायिभङ्गो, जयः स्थातुस्तत्र काले न संशयः। कामाङ्कगः सहस्रांशुर्मस्तकस्थो निशाकरः। यात्रिकोभङ्गमायाति स्थाने स्थायी जयी रणे। भानुरुदरगोयत्र निशेशोराहुवक्त्रगः। विशदी क्रीयते तत्र स्थायी जयति नान्यथा। स्वर्भानोरुदरे भानुर्हृदये तारकाधिपः। अनायासेन संग्रामे यायिनो जयमादिशेत्। उदराङ्के यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ। तदा सम्भवेत् सन्देहः सैन्ययोरुभयोरपि”।

गुदादियोगषट्कम्—“केतुधिष्ण्ये स्थिते सूर्य्ये चन्द्रे वज्राङ्कसंस्थिते। यायिभङ्गो, जयी स्थायी भाषितं ब्रह्मयामले। गुदे तीक्ष्णांशुसंयुक्ते कपालस्थे निशाकरे। यायी च भज्यते तत्र स्थायी जयति नान्यथा। गुदऋक्षस्थितः सूर्य्योराहुऋक्षस्थितः शशी। महाहवं भवेद्‌ घोरं किञ्चित् स्थायी जयी रणे। भानुस्तद्गिलिते ऋक्षे शशभृत्

संपुटे यदि । यायिनो विजयस्तत्र स्थायिनो भङ्गमादिशेत् । गुदभे वर्त्तते भानुर्ज्जठरे रोहिणीपतिः । दण्डयित्वा रिपोः सैन्यं यातास्येति निजालयम् । गुदे दिनकरो यत्र तत्रैव यामिनीकरः । समयुद्धं भवेत्तत्र किञ्चिदागन्तुको जयी" ।

वज्राङ्कयोगषट्कम्—"सूर्य्याङ्कस्थः सहस्रांशुर्ज्जिह्वायां शीतगुः स्थितः । यायिनोविजयं विद्यात् स्थायिनश्च पराजयम् । पुच्छक्षेत्रस्थितो भानुः रन्ध्रक्षेत्रे तु चन्द्रमाः । यायिनो मृत्युरायाति जयलाभौ च स्थायिनः । पुच्छपटके यदादित्यः कामाङ्के चन्द्रमाः स्थितः । यायी विजीयते तत्र शक्रतुल्योऽपि वैरिभिः । अंशुमाली स्थितोऽङ्के जठरस्थे सुधाकरे । आदत्तेऽरिश्रियं सर्वां जित्वा यायी रणाङ्गणे । भास्करे राहुपुच्छस्थे मृगाङ्के गुदमाश्रिते । समयुद्धं भवेत् तत्र किञ्चित् यायी जयी रणे । सूर्य्याचन्द्रमसौ यत्र वज्राङ्के यदि संस्थितौ । सैन्ययोरुभयोस्तत्र वधो भवति निश्चितम्" ।

कपालादियोगषट्कम्—"रन्ध्राङ्कस्थे दिवानाथे राहुजिह्वाङ्गगः शशी । स्थायिनस्तु जयस्तत्र भङ्गो भवति यायिनः । राहुशीर्षस्थिते मित्रे शशाङ्के हृदि संस्थिते । विना युद्धेन गृह्णीयाद्यायी सर्वामरिश्रियम् । कपाल संस्थितः सूर्य्यः सम्पुटस्थो यदा शशी । यायिना जीयते तत्र स्थायिनो भङ्गमादिशेत् । मस्तकस्थे दिवानाथे धिष्ण्यनाथे गुदस्थिते । यायिनो विजयो युद्धे स्थायिनस्तु पराजयः । राहुशीर्षगतोभानुः पुच्छर्क्षे तु निशाकरे । अन्योऽन्यं विग्रहं घोरं युद्धं भवति दारुणम् । दिनेशो राहुरन्ध्राङ्के चन्द्रस्तत्रैव सङ्गतः । विनाशं कोषराज्यस्य यायिनो मृत्युमादिशेत् ।"

राहुदशाङ्गविभागचक्रम्—"हृदयादीनि चाङ्गानि जिह्वान्तानि क्रमेण च । दशसंख्यान्यहं वक्ष्ये राहुचक्रस्य मध्यतः । पुष्पितं फलितं चैव निःफलं भ्रंशितं गुदम् । राज्यनाशभं वक्त्रं स्तनं जिह्वा क्रमेण च । पुष्पिते त्रीणि धिष्ण्यानि क्षेमलाभकराणि च । शत्रुभङ्गो भवेद्युद्धे सात्रा मासेन लाभदा । ततश्चत्वारि धिष्ण्यानि पञ्चकेण फलन्ति च । गजवाजिधनं देशं यायी तु लभते ध्रुवम् । अफलेषु त्रिधिष्ण्येषु परमैश्वर्य्यमिति । सन्धिं सेवां तथा देशं स्थायी यच्छति निश्चितम् । फलं प्राप्नोति वर्षेण भ्रंशितेषु त्रितारकैः । हस्तश्वपत्रमित्रादि देशकोषपरिग्रहैः । गुदकेन भ्रंश

लक्ष्मीः पद्मिनी प्रियवादिनी । रूपयौवनसम्पन्ना मासयुग्मेन लभ्यते । विग्रहस्य भवेद्वृद्धिर्युद्धे भङ्गस्तथैव च । रोगपीड़ा भवेद्वर्षे राजस्थाने त्रितारकैः । हस्त्यश्वपत्रमित्रादि देशकोषपरिग्रहाः । षड्भिर्मासैर्विनश्यन्ति यायिनस्तामसत्रये । नामसाम्ये चतुष्के तु तारकाद्वन्द्वसङ्गकाः । सद्य नाशकराः प्रोक्ता मासैकेन न संशयः । ततस्त्रीणि मृत्युभानि राजमृत्युप्रदानि च । आशीर्घातश्च शूलश्च पञ्चकेण फलन्ति च । युद्धे भङ्गो महाभीतिर्द्रव्यनाशः कुलक्षयः । सद्यो मृत्युं लभेद्यायी राहुवक्त्रे सुनिश्चितम् ।" इति दशाङ्गफलम् ।

"युद्धकाले यदा शीघ्रं यात्रायोगो न लभ्यते । उत्पाद्येते तदा शीघ्रं तत्कालेन्दुदिवाकरौ । इष्टनाड्योहताधिष्ण्यैः षष्टिभागाप्तशेषकैः । अश्विन्यादीन्दुभुक्तेन युतस्तत्कालचन्द्रमाः । यथा चन्द्रस्तथा सूर्य्यः कर्त्तव्यस्तेष्टकालिकः । अहोरात्रस्य मध्ये तौ भ्रमन्तौ धिष्ण्यमण्डले । स्थिरचक्रे पुरा प्रोक्तं चन्द्रादित्यफलं मया । चरचक्रेऽप्यनेनैव प्रकारेण फलम्भवेत् । सर्व्वेषु शुभकार्य्येषु यात्राकाले विशेषतः । अर्ककाले शुभश्चन्द्रोत्तयो हृदि गुदोदरे । पुच्छपट्के कपालस्थे शशाङ्के राहुवक्त्रगे । बन्धनं हानिर्मृत्युश्च सर्वकार्य्येषु जायते । हृदि गुदोदरे चन्द्रे विवाहे नन्दति द्वयम् । नैःस्वं वैधव्यविद्वेषौ मुखे पुच्छे तु मस्तके । पुष्पिते फलिते शुद्धो प्रश्नकाले शशी शुभः । अफले भ्रंशिते मध्ये मृत्युः शेषाङ्गगे विधौ । ऊर्द्ध्वं तु खेचरं चक्रमधोभूचरमुच्यते । उभयोः सन्निपातेन राहुकालानलं मतम्" ।

१० सूर्य्यकालानलचक्रम्—"ऊर्द्ध्वगास्त्रिस्त्रः शूलाग्रास्तिस्त्रस्तिर्य्यक् च संस्थिताः । द्वे द्वे नाड्यौ स्थिते कोणे अङ्कयुग्मं तथैकधा । मध्ये त्रिशूलदण्डाधो भानुभाद्भमष्टकम् । साभिजिच्च प्रदातव्यं सव्यमार्गेण सर्वं अष्टके जयोलाभः अङ्कपटके तथा पुनः । अङ्कयुग्मे रुजाभङ्गो मृत्युः शूलत्रये स्फुटम् । नामर्क्षं स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् । अधोगतैश्च नक्षत्रैरुद्वेगो-बन्धनम् । विवाहे विग्रहे युद्धे रोगार्त्तौ गमने तथा । सूर्य्यकालानलं चक्रं ज्ञातव्यं च प्रयत्नतः ।" (रोगे च कुजनक्षत्रं दिन मध्यन्तु युद्धके । प्रयाणे कृत्तिका लेख्या अन्यत्रार्कस्य दीयते) । क्वचित् अधिकपाठः

११ चन्द्रकालानलचक्रम्—"चन्द्रकालानलं चक्रं व्योमाकारं लिखेद्बुधः । चतुर्द्दिक्षु त्रिशूलानि मध्ये भिन्नानि कार-

वेत्। पूर्वत्रिशूलमध्यस्थं दिनऋक्षादि लेखयेत्। सव्य-मार्गेण दातव्या अष्टाविंशतितारकाः। त्रिशूले च बहिर्मध्ये मध्ये बहिस्त्रिशूलके। त्रिशूले चक्रबाह्ये च चक्रमध्ये तथैव च। नामऋक्षं स्थितं यत्र तत्र ज्ञेयं शुभाशुभम्। त्रिशूले च भवेन्मृत्युर्मध्ये च बहिरष्टकम्। लाभः क्षेमं जयः प्रज्ञा चन्द्रगर्भे न संशयः। वज्रभीयं प्रयत्नेन प्रथमाष्टविपञ्चकम्। ऋक्षं द्वात्रिंशकं चात्र कालरूपं न संशयः। लाभालाभौ सुखं दुःखं जय श्चैव पराजयः। चन्द्रकालानलं चक्रं ज्ञात्वा संशय-वर्जितम्"।

१२ घोरकालानलचक्रम्—"शलाकासप्तकं चक्रं लिखित्वा चन्द्रभादितः। त्रिषु त्रिषु च ऋक्षेषु नव सूर्यादयो-ग्रहाः। यदङ्के नामनक्षत्रं युद्धकारस्य जायते। फल-न्तस्य प्रवक्ष्यामि एकैकस्य यथाक्रमम्। भानुना शोकस-न्तापः शशाङ्कः क्षेमलाभदः। भूसुतो मृत्युमाधत्ते बुधे-बुद्धिः प्रजायते। जीवे लाभः, शुभं शुक्रे, सूर्यपुत्रे महद्भयम्। राहुणा घातपातश्च केतौ मृत्युर्न संशयः। यात्राजन्मविवाहेषु संग्रामे विग्रहेऽपि वा। घोर कालानलं चक्रं ज्ञात्वा कर्म समारभेत्"

१३ गूढ़कालानलचक्रम्—"सप्तरेखोद्भवं चक्रं चन्द्रभाद्यं भमण्डलम्। लिखित्वा कल्पयेच्चक्रं षडङ्गं जयका-ङ्क्षिभिः। दिनऋक्षात्तु गण्यते चक्रे गूढसम्पुटकर्त्तरी। दण्डः कपालं वज्राङ्कं ज्ञातव्यं स्वरवेदिभिः। यत्र ऋक्षे स्थितश्चन्द्रस्तत्रादौ त्रीणि गूढ़कम्। सम्पुटे नव भान्य-त्र कर्त्तरी च ततस्त्रिभिः। दण्डे धिष्ण्यानि च त्रीणि कपाले धिष्ण्यसप्तकम्। वज्राङ्के त्रीणि धिष्ण्यानि षडङ्ग श्चेति निर्णयः। यदङ्के नामनक्षत्रं युद्धकारस्य जायते। वक्तुं शुभाशुभं तस्य गूढ़कालानले स्थितम्। गूढ़स्थे विभ्रमो, युद्धे जयो भवति सम्पुटे। कर्त्तर्यां सङ्कटं युद्धं, दण्डे भङ्गो न संशयः। कपालस्थे भवेन्मृत्युर्वज्रे तस्य महद्भयम्। गूढकालानलं चक्रं भाषितं ब्रह्म-यामले"।

१४ शशिसूर्यकालानलचक्रम्—"द्वादशारं लिखेच्चक्रं मेषादि द्वादशान्वितम्। केन्द्रयुग्मस्य तत्रैव विख्यातं रविचन्द्रयोः। सिंहाद्यं मकरान्तस्य भानुक्षेत्रमुदाहृतम्। कुम्भादिकर्क पर्यन्तं चन्द्रक्षेत्रं न संशयः। चन्द्रक्षेत्रगते सूर्ये चन्द्र-स्तत्रैव संस्थितः। यायिनो विजयो युद्धे स्थायिनो भङ्ग मादिशेत्। सूर्यक्षेत्रे गते चन्द्रे सूर्यस्तत्रैव संस्थितः। यायी भङ्गमवाप्नोति स्थायिनो विजयो भवेत्। सूर्ये सूर्याङ्कसंयुक्ते चन्द्रे चन्द्राङ्कसंगते। तदा काले भवेद्युद्धमन्योन्यं तस्य विपर्यये। सूर्यक्षेत्रगते चन्द्रे चन्द्रक्षेत्रगते रवौ। महायुद्धं प्रवर्त्तेत संहारः सैन्ययोर्द्वयोः। यात्रायां युद्धकाले च चक्रमेतद्वि-लोकयेत्"। अत्र विशेषः। "एकेन क्रूरवेधेन विद्धो भवति चन्द्रमाः। स्वल्पं युद्धं तदा काले जायते नात्र संशयः। द्वाभ्यां वापि त्रिभिर्वापि पापैर्विद्धो यदा शशी। तदा युद्धं महाघोरं सैन्ययोरुभयोरपि। पक्षैः पृष्ठे भवेद्युद्धमग्रे चैशातिचारिभिः। मध्यगत्या भवेन्मध्ये पापैः सौम्यैस्तु तत् न हि। ऊर्द्ध-दृष्टौ भयेद्युद्धं मध्यदृष्टौ तु मध्यमे। अधोदृष्टा-वधस्तात्तु केकरे पार्श्वतो भवेत्। शनिराहुकुजादित्या-स्त्वेकरेखागता यदि। चन्द्रेण संयुतास्ते च तदा पात चतुष्टयम्। शनिना चन्द्रयुक्तेन जीववेधगतेन च। तदा वृष्टिर्भवेन्नूनं वर्षोपलमयोक्षितम्। भौमे-नाग्निर्भवेत् पातो राहुणा लोष्टपातकृत्। भानु ना चक्रवातश्च सर्वैः सर्वे भवन्ति च। शुक्रेण जलपातोऽपि पांशुपातः शशाङ्कजे। गुरुणा चञ्चला-पातः दिग्दाहः केतुना भवेत्"।

१५ संघट्टचक्रम्—"अश्विन्यादि लिखेत् चक्रं सप्तविंशति तारकम्। त्रिकोणं नवभिर्भेधः कर्त्तव्यस्त्रियगाकृति। अश्विनीरेवतीवेधो वेधश्चाश्विनिज्येष्ठयोः। मघापौष्णो मघाश्लेषे आश्लेषासत्रयोस्तथा। एवं संघट्टचक्रं च कार्यस्थगता ग्रहाः। अपनामक्षसंघट्टे युद्धं भवति नान्यथा। निर्वेधे सौम्यवेधे च युद्धं नास्ति न संशयः। क्रूरवेधे भवेद्युद्धं तत्काले घोरदर्शनम्। युद्धकाङ्क्षी भवेद्राजा यस्य वै क्रूरवेधनम्। युद्धहीनो भवेत् सौम्ये तथा वेधविवर्जिते। सौम्यक्रूरविभागेन मिश्रामिश्र क्रमेण च। वक्रातिचारगत्या च युद्धं स्वल्पस्य नास्ति च"।

१६ कुलाकुलचक्रम्(२)—"द्वितीया दशमी षष्ठी कुलाकुल-मुदाहृतम्। विषमा अकुलाः सर्वाः समास्तु तिथयः कुलाः। रविचन्द्रौ गुरुः सौरिस्तस्यादौऽप्यकुलामताः। भौमशुक्रौ कुलाख्यौ च बुधवारः कुलाकुलः। वारु-णार्द्राभिजिन्मूलं कुलाकुलमुदीरितम्। कुलानि समधिष्ण्यानि शेषभान्यकुलानि च। तिथौ वारे च नक्षत्रे अकुले यायिनो जयः। कुलाख्ये स्थायिनोन्नूनं सन्धिर्यैव कुलाकुले"।

१७ कुम्भचक्र(२)—"कुम्भाकारं लिखेच्चक्रं तिर्य्यग्रेखाप्रभेदितम्। तत्र चोर्द्ध्वमधोलेख्यमेकैकान्तरभं क्रमात्। भानुभाद्यं न्यसेत्तत्र रिक्तां पूर्णामिति क्रमात्१। एवं राशिक्रमाल्लेख्या रिक्ता पश्चात् इति क्रमात्२। रिक्ते रिक्ता भवेद्यात्रा पूर्णे यात्रा शुभावहा। इति यात्राफलं ज्ञेयं कुम्भचक्रद्वये स्थितम्"।

१८ प्रस्तारचक्र—"त्रयोदशोर्द्ध्वगा रेखा दश रेखाश्च तिर्य्यगाः। भवेयुः कोष्ठकास्तत्र सङ्ख्ययाष्टोत्तरं शतम्। मेषाद्या राशयो लेख्यास्तिर्य्यक् प्रथमपङ्क्तिषु। नवांशराशयश्चाधो नवधा सर्व्वराशिषु। कवर्गाच्चवधा लेख्यं कोष्ठके प्रथमाष्टके। द्वितीये सप्तमे चाद्या एवं टाद्यास्त्रिषष्ठके। यशवर्गौ चतुर्थे च अवर्गः पञ्चमे तथा। नवमाद्यष्टके ताद्याः शेषे पाद्याः द्विकोष्ठके। चतुरक्षरसंयोगात् अश्विन्यादिक्रमेण च। ज्ञेया नवांशका वर्णा मेषादिराशिमण्डले। भौमं शुक्रं बुधं चन्द्रं भानुं सौम्यं सितं कुजम्। गुरुं सौरिं शनिं जीवं लिखेत्तत्र कोष्ठकोपरि। कोष्ठाक्षरगतो ज्ञेय चन्द्रस्तत्कालसम्भवः। तदधीनं फलं सर्व्वं लाभालाभजयादिकम्। दिनऋक्षगतानाड्यः सप्तविंशति ताडिताः। षष्टिभक्ते भवेदृक्षं तत्कालेन्दुगतं स्फुटम्। इष्टनाड्योद्गताधिष्ण्यैः षष्टिभागाप्तशेषकैः। अश्विन्यादीन्दुभुक्तेन युक्तस्तत्कालचन्द्रमाः। क्रूरक्षेत्राक्षरे चन्द्रे न शुभं सर्व्वकर्म्मसु। शुभक्षेत्रे शुभं चैव प्रस्तारे चन्द्रनिर्णयः। नाडीफलौ यथौ वर्णा वर्गोक्तफलोदयः। कुःपक्षेण च मासेन ऋतौ च तोऽयनोदयः। जन्मकाले विवाहे च याने जन्मनि सङ्करे। शशाङ्कस्य फलं श्रेष्ठं स्वरशास्त्रेषु निश्चितम्। अंशकेनांशकं गुणयं भुवयुक्तं कृतं पुनः। चतुःस्थामुनयः (७,७,७,७). सूर्य्याः १२ सप्त७ रन्ध्र ८ गुणो पक्षः५,२। मासाः१२ शैलाः७ इना१२ स्तत्त्वाः२४ राशीनां च भुवाद्धमे। गुणाः ३ शैलाः ७ युगाः ४ पञ्च सप्त पञ्चाद्रयो ७ युगाः४। नागा८ बाणा ५ रसा६ भूता५ मेषादेरंशका इमे। नन्दस्य योऽंशकोदेवि! तस्य स्वामी च यो ग्रहः। तद्वशात् कालविज्ञानमुद्दिताशकसंख्यया। सूर्य्येऽयनं तथा चन्द्रे दिनान्यारे तथा बुधे। ऋतवश्च, गुरौ मासाः, शुक्रे पक्षः प्रकीर्त्तितः। सूर्य्यपुत्रे समा देवि! सर्व्वदैवविधिः स्मृतः"।

१९ कुम्भचक्रे दृष्टिचक्रम्—"प्रस्तारे द्वादशारे च कुम्भाकारक्रमेण च। नवांशराशिमार्गेण चक्रं भवति सुन्दरम्। यत्र मेषादिराशिस्थस्तत्कालेन्दुः प्रजायते। ग्रहदृष्टिवशात् सर्व्वं ज्ञेयं तत्र शुभाशुभम्। त्रिदशे पञ्चमे धर्मे चतुर्थाष्टमसप्तमे। पाददृष्ट्या निरीक्षन्ते प्रयच्छन्ति तथा फलम्। ऊर्द्ध्वदृष्टौ च भौमार्कौ केकरौ बुधभार्गवौ। समदृष्टौ च जीवेन्दू शनिराहू त्वधोमुखौ। मेषो वृषो मृगः कन्या कर्कमीनतुलास्तथा। आदित्यादिग्रहेन्द्राणां नीचं तु तस्य सप्तमम्। परमोच्चा दिशो१० रामा३ अष्टाविंशतियोन्द्रियाः १५,५। सप्तविंशास्तथा विंशः सूर्य्यादीनां तथांशकाः। परमोच्चात् परं नीचमर्द्धचक्रांशसंख्यया। नीचस्थानात् क्रमेणोच्च उक्तोऽसावत्र खेचरः। उच्चान्नीचाच्च यत्तुर्य्यं समस्थानं तदुच्यते। उच्चनीचसमस्थाने चन्द्रं ज्ञात्वा फलं वदेत्। उच्चस्थानस्थितं चन्द्रं भौमादित्यौ प्रपश्यतः। समस्थाने च गुर्व्विन्दू नीचस्थं राहुसूर्य्यजौ। बुधशुक्रौ त्रिकोणे च चन्द्रं तत्कालसम्भवम्। अन्यत्रस्थं न पश्यन्ति जात्यन्धा इव खेचराः। सौम्यदृष्टिस्थिते चन्द्रे सर्व्वं सौख्यं प्रजायते। क्रूरदृष्टिगतं पुंसां मृत्युर्हानिमहद्भयम्। एवं शुभयुते चन्द्रे सर्व्वं सौख्यं प्रजायते। क्रूरैः क्रूरफलं तत्र मिश्रैर्मिश्रं न संशयः। रक्तं पीतं सितं कृष्णं चन्द्रे वर्णचतुष्टयम्। ज्ञातव्यञ्च प्रयत्नेन प्रश्नकाले सदा बुधैः। रविर्भौमः सितः सौम्यो गुरुः सौरिः शशी तमः। वर्गेशाश्च अवर्गादौ ग्रहाज्ञेया विचक्षणैः। ख्यातौ रविकुजौ रक्तौ पीतौ जीवबुधौ ग्रहौ। शशिशुक्रौ सितौ वर्णौ कृष्णत्वं राहुमन्दयोः। यद्वर्णवर्गगश्चन्द्रस्तस्य स्वामी च यो ग्रहः। तस्य वर्णेन वर्णत्वं शशाङ्कस्य प्रजायते। रक्ते चन्द्रे भवेद्युद्धं कृष्णे मृत्युर्न संशयः। पीते शुभं विजानीयात् सिते शुभतरं फलम्"।

२० तुम्बुरचक्रम्—"द्वादशारं लिखेच्चक्रं नाडिकैका त्रिधा पुनः। पञ्चमे पञ्चमे स्थाने तिर्य्यग्वेधं तथा कुरु। अष्टोत्तरशतं चैव नाडीसंख्या प्रजायते। अश्वराशिस्थ चक्रस्य नाडिकाग्रेषु विन्यसेत्। क्रूरवेधाक्षरे चन्द्रो यदा तत्कालसम्भवः। तदा तस्य फलं वक्ष्ये विवाहादौ शुभाशुभम्। विवाहे क्रूरवेधेन वैधव्यं च विशीलता। यात्रायाञ्च भवेद्धानिर्न्नृपभङ्गोमहाहवे। क्रूराः सर्व्वे हानिकराश्चक्राः सौम्याः शुभप्रदाः। द्व्यादिवेधो भवेद्यस्य तस्य मृत्युर्न संशयः। तत्कालेन्दुफलं सर्व्वं

यदुक्तं चाद्रियामले । गोपितं त्वन्यशास्त्रेषु मया चात्र प्रकाशितम्" । अद्भुतसागरे ७२पृ० चक्रनामोद्देशे चरमित्यशुद्धम् । तत्स्वरमिति शुद्धम् एवमन्यस्याप्यशुद्धत्वात् दर्शितचक्रनामानुसारेण तत्र शुद्धता बोध्या

२१ भूचरखेचरचक्रम्—"अधःस्थं भूचरं चक्रमूर्द्धस्थं खेचरं तथा । चरस्थिरविभागेन स्थायी यायी फलं क्रमात् । मेषादिद्वादशारे च वाममार्गेण भूचरम् । तस्योर्द्धं खेचरं चक्रं दक्षमार्गेण सर्व्वदा । ये ग्रहाराहुमार्गस्था भूचक्रे ते व्यवस्थिताः । सूर्य्यमार्गेण ये लग्नाः खेचराः खेचरास्थिताः । भूचक्रे संस्थितैः पापैः खेचक्रे सौम्यखेचरैः । स्थायियायिबलं ज्ञेयं क्रमात् स्वरविचक्षणैः । सौम्याश्च भूचरे चक्रे क्रूराः खेचरगा यदि । संहारो जायते तत्र सैन्ययोरुभयोरपि । भूचरस्था ग्रहा यत्र दृश्यन्ते च शुभाशुभाः । यायी संहारमायाति स्थायी साङ्गश्च जयी । खेचरे खेचराः सर्व्वे सौम्याः पापगता यदा । स्थायिनो बलसंवर्त्तौ यायी जयति सर्व्वतः । भूचरे खेचरे सर्व्वे यदा मिश्रा शुभाशुभाः । तदा मिश्रं फलं वाच्यं स्थायिनो यायिनोऽपि वा" ।

२१ पद्मचक्रम्—"अश्विन्यादीनि धिष्ण्यानि पङ्क्तियुक्त्या लिखेद्बुधः । नाडीनाञ्च त्रये वेधः सर्पाकारः पद्माख्यके । क्रूरवेधस्थिता नाडी तद्धिष्ण्येन युते दिने । यात्रा युद्धं न कर्त्तव्यं पद्मचक्रे त्विदम् फलम्" !

२२ नाडीचक्रम्(२)—आर्द्रादिकं लिखेच्चक्रं क्रमाच्च त्रिनाडिकम् । भुजङ्गसदृशाकारं मध्ये मूलं प्रतिष्ठितम । यद्दिने चैकनाडीस्थाश्चन्द्रनामर्क्षभास्कराः । तद्दिनं वर्ज्जयेत्तस्य विवाहे विग्रहे रणे ।" १एकनाडीगते भौमे रविजीवसमन्विते । यदा चन्द्रेण संयुक्ते तदा क्षोणी परिप्लुता । ऊर्द्ध्वनाडीगतो वायुर्मध्यनाड्यां समो भवेत् । अधोनाड्यां भवेद्वृष्टिरेतद्दृष्टेस्तु लक्षणम्२ विवाहाङ्गत्रिनाडीचक्रम—"अश्विन्यादि लिखेच्चक्रं सर्पाकारं त्रिनाडीकम् । तत्र वेधवशात् ज्ञेयं विवाहादि शुभाशुभम् । आद्यनाडीगनक्षत्राण्यश्विरौद्र पुनो-नराः७।१२। हस्तेज्येष्ठामूलवारुणाः पूर्व्वभाद्रपदस्तथा२ याम्यः सौम्योऽपि गुरुदर्यौनि११ चित्रा मित्रं१७ जलाङ्कयम् २० । धनिष्ठा चोत्तरा भाद्रा मध्यनाडीव्यवस्थिताः । कृत्तिका रोहिणी सार्पं८ मघास्वातीविशाखकम् । उत्तरा श्रवणं पौष्णं२७ पृष्ठनाडीव्यवस्थिताः । वेधनाड्यामश्विन्यादि धन्यं च द्वितीयकम् । याम्यादि तुर्य्यं तुर्य्यं च कृत्तिकादि द्विकं द्विकम् । एवं त्रिरोधत्र बोद्धव्यं कन्यामन्त्रे गुरौ स्वरे । पण्यस्त्रीस्वामिमित्रेषु देशे ग्रामे पुरे गृहे । एकनाडीस्थऋक्षाणि यदा स्युर्वरकन्ययोः । तदा वेधं विजानीयाद्गुर्व्वादिषु तथैव च । प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो वदेत् । प्रनष्टं जन्मभं यस्य तस्य नामार्क्षतो वदेत् । द्वयोर्जन्मभयोर्वेधो द्वयोर्नामर्क्षयोस्तथा । जन्मनामर्क्षयोर्वेधो न कर्त्तव्यः कदाचन । एकनाडीस्थिता दुष्टा भर्त्तुश्चैव कुलाङ्गना । तस्मान्नाडीव्यधो नैव ग्राह्यो विवाहे शुभमिच्छता । आद्यनाडीव्यधे भर्त्ता मध्यनाडीव्यधे द्वयम् । पृष्ठनाडीव्यधे कन्या म्रियते नात्र संशयः । समासन्ने व्यधे शीघ्रं दूरवेधे चिरेण तु । व्यधान्तरभमानेन वर्षे रिष्टं प्रजायते । एकर्क्षं जायते यत्र विवाहे वरकन्ययोः । मूलवेधो भवेत्तत्र महादुष्टफलप्रदः । एकनाडीस्थिता यत्र गुरुर्मन्त्रश्च देवताः । तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत् । प्रभुःपण्याङ्गना मित्रं देशो ग्रामः पुरं गृहम् । एकनाडीगता भव्या न भव्या वेधवर्ज्जिताः । क्रूरग्रहगता नाड्यो यस्य जन्मर्क्षसम्भवाः । तस्य मृत्युर्न सन्देहो यात्रायुद्धे भयं भवेत् । द्व्यादिक्रूरव्यधो यस्य चक्रे चैव त्रिनाडिके । हानिर्विघ्नं भयं क्लेशो जायते बधबन्धनम् । एवं सौम्यव्यधो यस्य जन्मधिष्ण्ये प्रजायते । जयो लाभः सुखं तस्य जायते नात्र संशयः । शुभपापग्रहैर्विद्धा यस्य जन्मर्क्षनाडिका । तस्य मिश्रं फलं वाच्यं नाडीचक्रे स्वरज्ञैः" २ ।

"एतच्चक्रं समालिख्य अश्विन्याद्यं हि पङ्क्तितः । वेधो द्वादशनाडीभिः कर्त्तव्यः पन्नगाकृतिः । आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम् । द्वितीयेन तृतीयन्तु तृतीयेन द्वितीयकम् । एवं चांशव्यधो येषां जायते वरकन्ययोः । तेषां मृत्युर्न सन्देहः शेषांशाः स्वल्पदुःखदाः । गुरुमन्त्राश्च देवाश्च स्वस्थाने च सुशोभनाः । अन्त्यांशकगता भव्या ज्ञातव्या स्वरवेदिभिः । एवं जानाति यश्चक्रं चक्रराजं त्रिनाडिकम् । तस्य पार्श्वगतं ज्ञानं सर्व्वदैव प्रतिष्ठितम्" ३ ।

२२ कालचक्रम्—"नवोर्द्ध्वगानि धिष्ण्यानि नव तिर्य्यग्गतानि च । अधोगतानि धिष्ण्यानि नव चैव विनिर्द्दिशेत् । चतुर्न्नाडीकृतो वेधो मध्यनक्षत्रयोर्ज्झितः । सर्पाकारस्तु तच्चक्रं कालचक्रं प्रजायते । त्रीणि मध्यगतर्क्षाणि तानि कालमुखानि च । कोणस्थिते च ये धिष्ण्ये ते च

दंष्ट्रे द्वयं मतम् । दिनर्क्षमादितः कृत्वा नामर्क्षं यत्र संस्थितम् । मुखदंष्ट्रागतो मृत्युः शुभमन्यत्र संस्थिते । ज्वरिते नष्टदग्धे च विवाहे विपदे रणे । काल दंष्ट्राह्वयं नाम यस्य तस्य भयङ्करम्” ।

२४ सूर्य्यफणिचक्रम्—“सप्तविंशतिभान्यत्र पङ्क्तित्रयमितानि क्रमेण च । वक्रान्तरे वक्रान्तरे चैव फणिचक्रं त्रिनाडिकम् । यत्र ऋक्षे स्थितो भानुस्तदादि गणयेद्बुधः । नामर्क्षं च स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् । कुर्य्यान्मृत्युं च रोगञ्च नाडीवेधं गतो नृणाम् । वर्ज्जयेत् सर्व्वकार्य्येषु युद्धकाले विशेषतः । निर्व्वेधर्क्षकमध्यस्थं यस्य नाम प्रजायते । सिद्ध्यन्ति तस्य कार्य्याणि संग्रामे विजयो भवेत्” ।

२५ “चन्द्रफणिचक्रम्—“सूर्य्यफणीश्वरे चक्रे यदुक्तं च शुभाशुभम् । चन्द्रादौ तत्फलं चक्रे ज्ञेयं सर्वं फणीश्वरे ।”

२६ कविचक्रम्—“हीनसैन्यः सदा स्थायी यायी सैन्याधिकः सदा । अबलस्य बलोपायं वक्ष्येऽहं कविसङ्गरे । प्रयाणे चोत्प्रयाणे वा निशीथे मृगयाकृते । शोकार्त्ते व्यसनप्राप्ते हतसैन्ये विनायके । अष्टधा कविकालस्तु कथितो दुर्ब्बले नृपे । इत्थं कुर्व्वन् परान् युद्धे जयतीह न संशयः । चतुरस्रं त्रिनाड़ीकम् कविचक्रं लिखेद्बुधः । प्रवेशे निर्गमे भानि स्थानधिष्ण्यादि विन्यसेत् । यत्र नामाङ्किते स्थाने शत्रुसैन्यं व्यवस्थितम् । तत्र चक्रम् समालेख्यं सेनाध्यक्षस्य पूर्व्वकम् । त्रीणि त्रीणि प्रवेशे च ईशादौ विदिशि क्रमात् । निर्गमे तुर्य्यतुर्य्यौ च पूर्व्वाशादिक्रमेण च । सौम्याः क्रूरा ग्रहा यत्र प्रवेशे निर्गमे स्थिताः । वक्रातिचारगास्तत्र ज्ञात्वा कविरणं कुरु । जीवपक्षस्थिते चन्द्रे कृत्वाक्षं प्रवेशके । यानं कविरणे प्रोक्तं ज्ञात्वा प्रवेशनिर्गमौ । उदितेऽस्तस्वरो यस्य यत्र जन्मेन्दुसम्भवः । तद्दिने ते भटाः सर्वे वर्जनीयाः कवौ रणे । क्रूरे शीघ्रे प्रवेशर्क्षे यत्र तत्र विशेद्रणे । वक्रस्थे निर्गमे सौम्ये तादृशि निर्गमं कुरु । प्रवेशर्क्षे प्रवेशं च निर्गमे निर्गमं कुरु । भूबलं पृष्ठतः कृत्वा प्रोक्तः कविरणे जयः ।”

२७ खलचक्रम्—“चतुरस्रं चतुर्द्वारं खलचक्रं लिखेद्बुधः । नन्दाद्यास्तिथयोन्यस्याः पूर्व्वद्वारक्रमेण च । पूर्व्वाशादिचतुष्के तु सप्त सप्त क्रमेण तु । कृत्तिकादि लिखेन्मध्ये खले भान्यष्टविंशतिम् । शनिचन्द्रौ कुज सौम्यौ भानुशुक्रौ वृहस्पतिः । मध्ये बहिर्गतादेया अपसव्यं दिशां क्रमैः । यद्दिने यद्दिशि स्युस्ते तिथिधिष्ण्यदिनाधिपाः । प्रवेशः खलकद्वारे ऋक्षव्यक्तेन सर्व्वदा । खलकाभ्यन्तरे कालः शनिसूर्य्योऽयमङ्गलैः । बुधशुक्रेन्दुभिर्वाह्ये यायी स्थायी क्रमाज्जयी । खलके मध्यनक्षत्रे यो ग्रहो यत्र संस्थितः । तत्र स्थाने गते चन्द्रे फलं वक्ष्ये शुभाशुभम् । सूर्य्यस्थानेसंस्थिते शूरे मृत्युश्चन्द्रसमाश्रिते । भौमस्थाने महाक्रोधी बुधस्थाने भयङ्करम् । गुरुस्थाने स्थितः स्यात्तु भङ्गमायाति भार्गवे । शनिस्थे सततं युद्धं राहुस्थे मरणं ध्रुवम् । वक्रस्थाने भवेद्युद्धं शीघ्रस्थाने च धावति । समचारगते स्थायी काणेन्दुस्थे च मोहनम् । क्रूरपृष्ठे जयो युद्धे, सौम्यपृष्ठे पराजयः । क्रूरे च संमुखे मृत्युर्जयः सौम्यग्रहे स्थिते । योधयोः पृष्ठगाः क्रूरा उभयोर्मृत्युकारकाः । सौम्याः सन्धिप्रदा युद्धे मिश्रा मिश्रफलप्रदाः ।”

२८ कोटचक्रम्(८)—“अथातः सं प्रवक्ष्यामि कोटयुद्धस्य निर्णयम् । स्वल्पारिः कुरुते यत्र भूरिसैन्यपराभवम् । यस्याश्रयबलादेव राज्यं कुर्व्वन्ति भूतले । विग्रहं चतुराशायां सामात्यैः शत्रुभिःसह । विषमं दुर्गमं घोरं चक्रं भीरुभयावहम् । कपिशीर्षैश्च शोभाढ्यं रौद्राट्टालकमण्डितम् । प्रतोली यत्र कालास्यं परिखा कालरूपिणी । रणमण्डलताटोपः ठिक्कीयन्त्रमण्डितम् । मुसलैर्मुद्गरैः पाशैःकुन्तखड्गैर्धनुःशरैः । स युतः सुभटः शूरैरिति दुर्गं समादिशेत् । दुर्गस्थो दुर्गमः शत्रुरसाध्यो येन सिध्यति । कोटचक्रं प्रवक्ष्यामि विप्रपादष्टधा मतम् । प्रथमं मृण्मयं कोटं जलकोटं द्वितीयकम् । तृतीयं ग्रामकोटञ्च चतुर्थं गिरिगह्वरम् । पञ्चमं पर्व्वतारोहं षष्ठकोटञ्च डामरम् । सप्तमं वक्रभास्थं विषमाख्यं तथाष्टमम् । मृण्मये साधयेत् खारिष्टर्ज्जलस्थे जलभोजनम् । ग्रामदुर्गेऽग्निदानञ्च प्रवेशो गह्वरस्य च । पर्व्वते स्थानभेदश्च भूबलं डामरे रणे । चक्राख्ये कवियागश्च विषमे स्थायियायिता । स्वतिवस्त्रं कालकर्णश्चक्रावर्त्तं च डामरम् । तालावर्त्तञ्च पद्माङ्कं वज्रभेदञ्च शाम्बरम् । एतन्नामाष्टकं ज्ञेयं दुर्गाष्टकक्रमेण च । यस्य वर्गस्य योऽभ्यन्त्रः स वर्गस्तस्य भङ्गदः । अ गरुडः क मार्ज्जारः च सिंहः ट शुनीह्रतः । त सर्पः प आखुकश्च य गजः श अजाह्रतः । दुर्गवर्गस्य ये मध्यगा वक्षोस्तङ्गागजा नराः ।

तद्वर्ग्यास्तु रणे त्याज्या न कर्त्तव्या गडाधिपाः स्ववर्ग-पञ्चमे स्थाने खण्डभङ्गश्च जायते। अवर्गाद्यष्टकं ज्ञेयं पूर्वाद्यष्टदिशां क्रमात्। कोटचक्रं लिखेच्चादौ चतुरस्रं त्रिनाडिकम्। कृत्तिकादीनि भान्यत्र साभिजिन्ति न्यसेद्बुधः। बहिः कोटे च मध्ये च मध्ये दुर्गे बहिर्बहिः। प्रवेशो निर्गमस्तत्र ज्ञातव्यः स्वरवेदिभिः। ऐशात् प्रवेशधिष्ण्यानि मध्यात् प्राचीविनिर्गमः। वह्निद्वादश भान्यत्र प्राकारे तारकाष्टकम्। दुर्गमध्ये तथा चाष्टौ तन्मध्ये स्तम्भतुर्य्यकम्। कृत्तिका पुष्यसार्पञ्च मघास्वातीविशाखकम्। अनुराधाभिजित् कर्णौ धनिष्ठाश्वियमाह्वयम्। ब्राह्मं पुनर्वसु भाग्यं चित्रा ज्येष्ठा तथोत्तरा१२। शतभं रेवती चैव प्राकारे तारकाष्टकम्। मृगरौद्रोत्तराहस्तमूलमाषाढपूर्वकम्। पूर्वोत्तरा तथा भाद्रा मध्ये ताराष्टकं तथा। प्राच्यां रौद्रं यमे हस्तं पूर्वाषाढ़ा च पश्चिमे। कौवेर्य्यामुत्तरा भाद्रा ह्येतत्स्तम्भचतुष्टयम्। कृत्तिकाद्यं मघाद्यञ्च मैत्राद्यं वासवादिकम्। त्रीणि त्रीणि प्रवेशे च द्वादशर्क्षाणि निर्गमे। कृत्तिकादिरयं न्यासः सुबोधार्थः प्रदर्शितः। दुर्गभाद्गणना चात्र ग्रहैर्वाच्यं ततः फलम्। दुर्गनामस्थितो वर्णो यद्दुर्गोच्चारितः स्फुटम्। तदाशादि लिखेच्चक्रं क्रमात् स्वरविचक्षणैः। चतुरस्रं१ वृत्तं२ दीर्घं३ त्रिकोणं४ वृत्तदीर्घकम्५। अर्द्धचन्द्रं६ तथा ज्ञेयं गोस्तनं७ धनुराकृति८। चतुरस्रे यथा न्यासो भूमिभागक्रमेण च। प्रवेशे निर्गमे ह्यस्ति तथा वृत्तादिसप्तके। दुर्गे भित्तिविभागेन दातव्यं धिष्ण्यमण्डलम्। तत्रस्थैः खेचरैः सर्वैः फलं वाच्यं यथोदितम्। बाह्यभे मध्यभे वापि यत्रस्थाः क्रूरखेचराः। तत्र स्थाने क्षतं यत्नं हन्ति दुर्गं ससैनिकम्। बुधशुक्रेन्दुजीवाश्च सदा सौम्या ग्रहा मताः। शन्यर्कराहुकेत्वारा मताः क्रूरा बुधैरिमे। त्रिप्रकारो ग्रहे चारो वक्रः शीघ्रः समोमतः। उच्चनीचसमास्ते च त्रिधा चक्रे भ्रमन्ति च। ऊर्द्ध्वाधः समास्तिर्य्यग्दृष्टिभेदश्चतुर्विधः। स्वर्क्षे मित्रे समे शत्रौ चतुर्द्धा च स्थिते ग्रहः। सूर्य्यक्रान्ता उदीयन्ते शीघ्राश्चार्क्के द्वितीयगे। समास्तृतीयगे यान्ति मन्दगत्या चतुर्थगे। वक्रः स्यात् पञ्चषष्ठेऽर्के त्वतिवक्रोऽष्टसप्तमे। नवमे दशमे भानौ जायते कुटिला गतिः। शीघ्रगाश्च भवन्त्यत्र द्वादशैकादशे तथा। राहुर्वक्रः सदा ज्ञेयो रवीन्दू शीघ्रगौ तथा। शीघ्रोऽतिचारगत्या च समश्च सप्तमन्दया। वक्रातिवक्रकौटिल्यगत्या वक्रग्रहोमतः। क्रूरोऽतिक्रूरतां याति सौम्योयात्यतिसौम्यताम्। वक्रचारे समुत्पन्ने शीघ्रे तुङ्गविपर्य्ययः। मेषो वृषोमृगः कन्या कर्क मीनतुलास्तथा। रव्यादीनां क्रमादुच्चं नीचं यत्तस्य सप्तमम्। उच्चान्नीचाश्च यत्तुर्य्यं समस्थानं तदुच्यते। उच्चस्थं मध्यमं नीचं वक्रे यत्र व्यवस्थितम्। ऊर्द्धदृष्टी च भौमार्कौ केकरौ बुधभार्गवौ। समदृष्टी च जीवेन्दू शनिराहू त्वधोदृशौ। सुहृदोऽर्केन्दुभौमेज्या एवं शुक्रश्चभानुजाः। अन्योन्यं वैरिणोह्येते राहोः सर्वे च शत्रवः। स्वक्षेत्रस्थे बलं पूर्णं पादोनं मित्रभे ग्रहे। अर्द्धं समगृहे ज्ञेयं पादं शत्रुगृहस्थिते। क्रूरोगर्भे पुरं हन्ति प्राकारे खण्डकारकः। बहिःस्थो वेष्टके सैन्ये मृत्युदो नात्र संशयः। क्रूरागर्भे, शुभा बाह्ये निश्चितन्ते पुरान्तकाः। सौम्या मध्ये बहिः क्रूरा असाध्यं दुर्गमुच्यते। क्रूरचतुष्टयं मध्ये प्राकारे सौम्यखेचराः। भेदोभङ्गो भवेत्तत्र विना युद्धेन गृह्यते। प्राकारे संस्थिताः क्रूरामध्ये सौम्याग्रहा यदि। दुर्गभङ्गः समुत्पन्नो भङ्गमायाति वेष्टकः। मध्ये नाडीस्थिताः सौम्याः क्रूरा बहिरवस्थिताः। सैन्यावर्त्तो बहिः शत्रोर्विना युद्धेन जायते। प्राकारे पुरमध्ये च यदा क्रूरा व्यवस्थिताः। सौम्या बाह्ये तदा दुर्गं यत्नेनापि सिद्ध्यति। सौम्या मध्ये च कोटे च बाह्ये पापग्रहा यदि। दैवैश्चेन्द्रादिभिर्दुर्गं रणारम्भे न गृह्यते। प्राकारबाह्यगाः क्रूराः सौम्या मध्यगता यदि। युद्धे प्राकारखण्डस्य पुरभङ्गो न जायते। सौम्या बाह्ये तथा कोटे मध्ये क्रूरग्रहाःस्थिताः। स्वयं दुर्गं प्रयच्छन्ति वेष्टकस्य गडाधिपाः। बाह्याभ्यन्तरगाः क्रूराः प्राकारे शोभना ग्रहाः। रिपुपक्षः क्षयं याति विनायुद्धेन निश्चितम्। प्राकारस्था ग्रहाः क्रूराबहिर्मध्ये शुभाःस्थिताः। समयुद्धं भवेत्तत्र खण्डःपातो दिने दिने। स्तम्भान्तरगता यस्य ग्रहाः सौम्याः शुभान्विताः। भवेयुस्तस्य कोटस्य न नाशस्तु कदाचन। यदि शाक्रादहं (शिवः) तत्र युध्यमानोरणेऽम्बिके ! ! तथापि न भयं विद्यादिति सत्यं च नान्यथा। सौम्याः क्रूराग्रहाश्चाष्टौ मध्ये प्राकारबाह्यगाः। एकस्था यत्र कुर्वन्ति सङ्ग्रामं तत्र दारुणम्। गजाश्वरथभूपालैः सामन्तैर्मण्डलेश्वरैः। तत्राध्यक्षभटामर्द्दं उभयोः सैन्ययोः क्षयः। बाह्ये यत्र प्रवेशर्क्षे

संग्रामं चारभेद्यदा। तदा सिध्यति तत् दुर्गं न करोतीह विस्मितम्। कोटस्थैस्तु गतोयोद्धा शस्त्रहस्तो महाबलः। शस्त्रं त्यक्त्वा वदीत्येवं चर्म्मभार्गं ददस्व मे। निर्गमेषु च क्रूरेषु संग्रामं यदि चारभेत्। नैव सिद्ध्यति तद्दुर्गं कोटमध्यस्थ जयावहः। बाह्यनाड्यां स्थिता ये च ग्रहाः पापान्विता यदा। मध्ये शुभान्विता ये च तत्र भङ्गो न जायते। गडाधीशाः स्मृताः सौम्या वेष्टाधीशाश्च पापकाः। चोत्तयुग्मे स्थिता ये च ज्ञातव्याश्च प्रयत्नतः। गडाधीशो भवेच्चन्द्रो वेष्टाधीशश्च भास्करः। चन्द्रसूर्य्यविभागेन ज्ञातव्यं च बलाबलम्। अंशाधीशोभवेच्चन्द्रस्ताराधीशोहि भास्करः। चन्द्रसूर्य्यगतिं ज्ञात्वा पश्चाद्वेधं तु कारयेत्। वेष्टाधीशो भवेन्मध्ये गडाधीशो हि बाह्यगः। स्वयं दुर्गं प्रयच्छन्ति वेष्टकस्य गडाधिपाः। चापकुन्तगदापाशखड्गहस्तैर्महाभटैः। उभयोर्द्वयो राज्ञोः सैन्यावर्त्तो हि जायते। वाहिन्यो रक्तवाहिन्यो दुस्तराः प्रेतसङ्कुलाः। वसासृक्पङ्कलिप्ताङ्गा अन्त्रमालावगुण्ठिताः। रटत्काकशिवागृध्रनर्त्तकिनीभैरवाश्रमाः। वेतालखेचरा भूताः पिशाचाः स्वेच्छयाहताः। ईदृशश्च महाघोरं तत्काले जायते ध्रुवम्। न कश्चिद्विजयी युद्धे द्वयं याति यमालयम्। समसंख्याः शुभाः क्रूराः बहिर्म्मध्ये यदा स्थिताः। तदा सन्धिं विजानीयात् सैन्ययोरुभयोरपि। क्रूरैर्भङ्गोजयः सौम्यैर्मिश्रैर्मिश्रं फलं मतम्। विचार्य्य युद्धं कर्त्तव्यं कोटचक्रे स्वरोदये। प्रवेशधिष्ण्यगे चन्द्रे जीवपक्षे संस्थिते। निशि कपिरणं दुर्गं कर्त्तव्यं बाह्यसैन्यकैः। निर्गमसंस्थिते चन्द्रे दुर्गाभ्यन्तरगैर्नृपैः। कर्त्तव्यं कपियुद्धं तु रात्रौ शुभे वहिर्जने। प्रवेशनिर्गमायुक्तौ सैन्ययोरुभयोर्निशि। कपौ कोटे जयोयुद्धे विपरीते पराजयः। क्रूरोवक्री प्रवेशर्क्षे पुरमध्यगतो यदा। तदा कोटविनाशाय कोटस्थो बाह्यभूपतेः। प्रवेशे बाह्यगैर्वक्रैः क्रूरैः स्वसैन्यविग्रहः। दुर्भिक्षं मृत्युर्भङ्गश्च वहिःसैन्यस्य जायते। निर्गमर्क्षे बहिःस्थे च क्रूरोवक्रं करोति चेत्। प्राकारस्य भवेद्भङ्गः प्राकारस्थे परस्य च। पुरभे निर्गमे वक्राः कथञ्चित् क्रूरखेचराः। दुर्गं मुक्त्वा तदा काले दुर्गस्थः प्रपलायते। यथा क्रूरैस्तथा सौम्यैः फलं ग्राह्यं विपर्य्यये। मिश्रैर्मिश्रं विजानीयात् कोटचक्रे न संशयः। उच्चग्रहैः समायोगो न चाम्बैर्न वक्रोज्झितैः। न भास्करकरोच्छिन्नैर्न खेचरपराजितैः। दुर्गसैन्यं तथा तुच्चे प्राकारे मध्यभागतः। नीचस्थं वेष्टकं सैन्यं ज्ञातव्यं स्वरवेदिभिः। कोटे कोटाधिपौ नीचौ निष्फलौ भौमभास्करौ। समस्थौ च पुरं सर्वशुभस्थो निष्फलौ च तौ। प्राकारवेष्टकान् घ्नन्तावुच्चस्थौ राहुसूर्य्यजौ। प्राकारस्थौ बहिःसैन्यं नीचस्थौ निःफलौ चतौ। समदृष्ट्या गुरुचन्द्रौ पश्यतः सर्वतः सदा। तिर्य्यकस्थानं बुधशुक्रौ फलदौ नात्र संशयः। ऊर्द्ध्वदृष्टिग्रहैः कुर्य्यात् ढङ्कीयन्त्रवाहनम्। समे च साधयेत् खड्गरक्षाणमधोमुखे। दुर्गमध्यस्थिते सूर्य्ये जलशोषः प्रजायते। चन्द्रे भङ्गः, कुजे दाहो, बुधे बुद्धिबलानराः। वाक्पतौ दुर्गमध्यस्थे सुभिक्षं प्रचुरं जलम्। चलचित्तानराः शुक्रे, मृत्युरोगौ शनैश्चरे। दुर्गमध्ये स्थिते राहौ भेदोभङ्गो महद्भयम्। केतौ मध्यगते तत्र विघ्नदानं गडाधिपे। इत्थमुक्तं फलं मध्ये एवं बाह्यस्थितैर्ग्रहैः। उपग्रह समायोगाद्यत्नं प्राणसंशयः। अकारादिस्वराः पञ्च पूर्व्वाद्याशाचतुष्टये। मध्येऽन्त्यं सव्यमालिख्य अन्तस्थाने च खण्डिका। दुर्गनाम्नः स्वरोयस्य बालो वास्तमितोऽपि वा। तद्दिने प्रारभेद्युद्धं दुर्गं सिद्ध्यति नान्यथा। वज्रार्गलविधानं च कर्त्तव्यं दुर्गरक्षणे। भञ्जने यमराजाख्यं यदुक्तं चादिजामले। शुक्रोबुधोगुरुर्मन्दो राहुर्मन्दः सितोबुधः। चन्द्रः सूर्य्यः शनिः सौम्यो वैशाखात् कोटपालकाः”।

२८ गजचक्रम्—“अथातः सं प्रवक्ष्यामि चक्रं मातङ्गनामकम्। येन विज्ञातमात्रेण यात्रायुद्धे जयोभवेत्। गजाकारं लिखेच्चक्रं सर्व्वावयवसंयुतम्। अष्टाविंशति भान्यत्र देयानि सृष्टिमार्गतः। मुखे शुण्डाग्र नेत्रे च कर्णे शीर्षाङ्घ्रि पुच्छके। द्विकं द्विकञ्च दातव्यं पृष्ठोदरे चतुश्चतुः। द्विरदनामभान्यादौ वदनाद्गण्यते बुधैः। यत्र धिष्ण्ये स्थितः सौरिर्ज्ञेयं तत्र शुभाशुभम्। मुखशुण्डाग्रनेत्रे च सौरिभं मस्तकोदरे। युद्धकाले भवेद्यस्य जयस्तस्य न संशयः। पादे पृष्ठे च पुच्छे च कर्णसंस्थे शनैश्चरे। मृत्युर्भङ्गो रणे तस्य ऐरावतसमोयदि। एतेषां दुष्टभानाञ्च यत्काले संस्थितः शनिः। तत्काले पट्टबन्धश्च वर्जनीयः प्रयत्नतः। पृथिव्या भूषणं मेरुः सर्व्वस्त्री भूषणं शशी। नराणां भूषणं विद्या सैन्यानां भूषणं गजः। शरतोमरचक्राद्यैर्गजस्कन्धस्थितानराः।

तत्त्वणात् स्वर्गमायान्ति तस्मात् स्वर्गोपमा गजाः। नास्ति हस्तिसमो योद्धा नास्ति हस्तिसमः सखा। नास्ति हस्तिसमो बन्धुर्नास्ति हस्तिसमो रिपुः"।

२० अश्वचक्रम्—"अश्वाकारं लिखेच्चक्रमश्विन्याद्दिताश्रकाः। वदनात् सृष्टिगा देया अष्टाविंशतिसंख्यया। मुखाक्षिकर्णशीर्षेषु पुच्छाङ्घ्रौ युग्मसंख्यया। पञ्च पश्चोदरे पृष्ठे सौरियैत्र फलं ततः। मुखाच्चुदरशीर्षेषु यदा सौरिर्व्यवस्थितः। युद्धकाले तदा तस्य जयो भवति नान्यथा। कर्णपुच्छाङ्घ्रिपृष्ठस्थे अश्वचक्रेऽर्कनन्दने। विभ्रमं भङ्गं हानिञ्च करोत्यश्वो महाहवे। एतत्स्थाने स्थितः सौरिर्यदा काले हयस्य च। पङ्गुवश्यो गमे युद्धे वर्ज्जयेत्तं हयं नृपः। देशान्तरस्थितास्तस्य रिपवः सन्ति शङ्किताः। तुरङ्गा यस्य भूपस्य विचरन्ति महीतले। मेदिनी तस्य वश्या स्यादिति वाक्यं विनिश्चितम्। सर्व्वाःश्रियो न राजन्ते विनाऽश्वेन महीभुजाम्"।

२१ रथचक्रम्—"आदौ चक्रं समालिख्य रथाकारं सुशोभनम्। रथाग्रे त्रिलिशूलानि रथचक्रं त्रिदण्डकम्। भानुभं मध्यशूलाग्रे ततः स्वर्गगतानि च। त्रीणि त्रीणि लिखेद्देवं सप्तविंशतिसंख्यया। महारथिकनक्षत्रं यत्र तत्र शुभाशुभम्। प्रङ्ग मृत्युर्जयश्चक्रे रथे भग्निः सदण्डके"।

२२ व्यूहचक्रम्—"अष्टारं वर्त्तुलाकारं व्यूहचक्रं त्रिनाडिकम्। दण्डचतुष्टयं बाह्ये कर्त्तव्यञ्च चतुर्द्दिशम्। पूर्व्वदण्डाग्रतोन्यस्य दिनभाद्यं भमण्डलम्। प्रवेशे निर्गमे चैव त्रीणि त्रीणि प्रदक्षिणे। शशिसंज्ञाष्टकं मध्ये तद्बाह्ये भानुसंज्ञकम्। तृतीयं राहुसंज्ञं च केतुर्दण्डचतुष्टये। चन्द्रजे विजयो लाभः सूर्य्यजे मध्यमं फलम्। राहुधिष्ण्याष्टके विघ्नं मृत्युः केतुचतुष्टये। एवमुक्तं चतुःस्थाने यद्दिने यस्य नामभम्। तद्दिने तत् फलं तस्य सर्व्वकार्य्येषु सर्व्वदा"।

२३ कुन्तचक्रम्—"कुन्ताकारं लिखेच्चक्रं तीक्ष्णदण्डसमन्वितम्। दिनभादि समारभ्य कर्त्तव्यं नवकत्रयम्। राजभं नवके यत्र तत्र वक्ष्ये शुभाशुभम्। तीक्ष्णे मृत्युर्जयो दण्डे शेषधिष्ण्ये समं रणम्"।

२४ खड्गचक्रम्—"खड्गचक्रं समालिख्य नयभेदसमन्वितम्। योधधिष्ण्यात् समारभ्य त्रीणि त्रीणि लिखेद्बुधः। यवं वज्रं तथा दृष्टिं पात्रिकां वज्रधारिके। खड्गं तीक्ष्णं विजानीयात् नवाङ्गानि विधानतः। यवादौ यत्र वस्त्रान्ते जायन्ते क्रूरखेचराः। मृत्युर्भङ्गो भवेद्दुःखं सौम्यैर्लाभो जयस्तथा। खड्गे धाराद्वये तीक्ष्णे क्रूरैर्जयति सङ्गरे। सौम्यैस्तथा भवेद्भङ्गो मिश्रैर्मिश्रफलं मतम्"।

२५ छुरिकाचक्रम्। "यथा खड्गं तथा विद्याच्छुरिकाचक्रनिर्णयम्। क्रूरसौम्यविभागेन योधधिष्ण्यादि विन्यसेत्"।

२६ चापचक्रम्—"चापचक्रं समालेख्य गुणबाणसमन्वितम्। शशिनक्षत्रतोभानि त्रीणि त्रीणि समालिखेत्। त्रीणि बाणस्य मूले तु मध्ये मूर्ध्नि क्रमात्तथा। चापमूलस्य मध्योर्द्धे त्रीणि त्रीणि तथा पुनः। गुणे तु त्रीणि त्रीण्येव योधनक्षत्रतः फलम्। शरमूले भवेन्मृत्युर्मध्ये व्याधिः फले जयः। गुणमध्ये भवेद् भङ्गश्चापमध्ये धनक्षयः। चापोर्द्धे विजयो ज्ञेयो, गुणोर्द्धे लाभसंयुतः। चापाधो विग्रहो मृत्युर्गुणाधोऽपि तथा फलम्। पापग्रहयुते नेष्टं विशेषेण तु नान्यथा। सौम्ययोगे जयो लाभश्चापचक्रे समादिशेत्। शुभपापसमायोगे बलाधिक्ये बलं स्फुटम्"।

२७ शनिचक्रम्—"शनिचक्रं नराकारं लिखित्वा सौरिभादितः। नामधिष्ण्यं भवेद्यत्र ज्ञेयं तत्र शुभाशुभम्। मुखैकं स्कन्धयोस्तुर्य्यं षट्पादे तुर्य्यं वामके। हृदि पञ्च तुर्य्यं शीर्षे नेत्रयुग्मे द्विकं द्विकम्। हाम्यास्ये दक्षदोर्लाभः भ्रमोऽङ्घ्रौ वामदोरुजम्। हृदि श्रीर्मस्तके राज्यं नेत्रे सौख्यं मृतिर्गुदे। जन्माष्टद्वादशे तुर्य्ये यदा विघ्नकरः शनिः। तदा सौख्यं वपुःस्थं चेत् हृच्छीर्षे नेत्रदक्षदोः। तृतीयैकादशे षष्ठे यदा सौख्यकरः शनिः। तदा विघ्नं शरीरे चेत् वक्त्राङ्घ्रिगुह्यवामदोः। यस्य पीड़ाकरः सौरिस्तस्य चक्रमिदं स्फुटम्। लिखित्वा कृष्णवर्णेन तैलमध्ये क्षिपेद्बुधः। निःक्षिप्य भूमिमध्यस्थं कृष्णपुष्पैः सपूजयेत्। तुष्टिं याति न सन्देहः पीड़ां त्यक्त्वा शनैश्चरः"

२८ सेवाचक्रम्—"सेवाचक्रं शीरे सप्त पृष्ठे सप्त तथोदरे। पादयोः सप्त ऋक्षाणि साभिजिन्त्यत्र विन्यसेत्। स्वामिभाद्भृत्यभं गुण्यं, भृत्यभात् स्वामिभं तथा। निष्फलं पादपृष्ठस्थे फलदं मस्तकोदरे"।

२९ नरचक्रम्—"नरचक्रं समालिख्य अष्टावयवसंयुतम्। येन विज्ञातमात्रेण क्रियते घातनिर्णयः। मुखैकं मस्तके

त्रीणि हस्ते पादे चतुश्चतुः। हृदि पञ्च त्रिकं कण्ठे साभिजित् तत्र विन्यसेत्। कृत्वा योधभमादौ तु मस्त-मस्तकवामके। हस्तपादोदरे कण्ठे दक्षहस्ताङ्घ्रि गण्यते। यत्राङ्के भानुभौमार्किराहवोऽधिष्ण्यसंस्थिताः। तत्र घातं विजानीयात् चन्द्रयोगे विशेषतः। ग्रह-भुक्तिप्रमाणेन नवांशकक्रमेण च। प्रहारो जायते तत्र चक्रे द्विगुणसंख्यया। निजभे चार्द्धघातं च पादोनं मित्रभे पदे। उदासीने भवेत् सर्वं द्विगुणं शत्रुभगे। एकोऽप्यनेकघातं च करोति भूबलोज्झितः। भूबले च यदा खेटाः स्थिताघातं न कुर्वते। यत्र यत्र स्थिते घातो यत्रयत्रस्थितेन हि। तत्फलं कथयिष्यामि ग्रहभूमिवशात्पुनः। क्रूराघातं न कुर्वन्ति पृष्ठदक्षिणगा रणे। सम्मुखावामगा ह्येते योधाङ्के घातकारकाः। दक्षिणाङ्के गताः क्रूराः सौम्यावामाङ्गसंस्थिताः। शिर-श्छेदे समुत्पन्ने भटं धावति सम्मुखम्। यस्य वामाङ्गगाः क्रूराः सौम्या यस्य च दक्षिणे। तस्य भङ्गो रणे नूनं यदि शूरो महाभटः"।

४० डिम्भचक्रम्—"डिम्भचक्रे न्यसेद्भानि भानुभात् त्रीणि मस्तके। मुखे त्रीणि द्वयं स्कन्धे एकैकं बाहुहस्तयोः। पञ्चहृन्नाभिगुह्येऽकं षट्जान्वेकैकपादयोः। विलेख्यं-सूर्यनक्षत्रात् जन्मभं तत्र चिन्तयेत्। शीर्षस्थे छत्रलाभश्च वक्त्रे मिष्टान्नभोजनम्। स्कन्धेऽवनी च, बाहुभ्यां स्थानभ्रष्टोभवेन्नरः. पाणिभ्यां तस्करो लक्ष्मी हृद्यल्पायुश्च नाभिभे। गुह्ये कामी, क्षमी, ज्ञानी, लोकजीवी च पादयोः"।

४१ पक्षिचक्रम्—"चक्षुर्मस्तककण्ठे च हृद्युदराङ्घ्रिपक्षयोः, त्रीणि त्रीणि क्रमेणैव शशिभाद्विन्यसेद्बुधः। चक्षुःस्थे नामभे मृत्युः, शीर्षे कण्ठोदरे हृदि। विजयः स्थे स्थलाभश्च च भङ्गदं पादपक्षयोः"।

४२ वर्गचक्रम्—"अगचडङक मार्जारश्च सिंहः टः शुनी-सुतः। तःसर्पः प व्याखुश्च य गजः शशजासुतः। वसु-बाणाङ्कवेदास्तु चन्द्राग्निनेत्रवह्नयः। वर्गाङ्काः क्रमशो-ज्ञेया वैनतेयाद्यजान्तकाः। पूर्वादिक्रमशो ज्ञेयं वर्गा-परिदिगष्टकम्। नाम्नि मात्राक्षराः ग्राह्या वर्गाङ्कोपेत संख्यया। प्रत्येकं स्थापयेत्तत्र पिण्डं कृत्वाष्टभिर्भजेत्। शेषसंख्यो ध्वजो१धूम्रः२ सिंहः३ श्वा४ वृष५रास भौ६। गजो७ध्वाङ्क्षः८ क्रमेणैवमायाश्चाष्टौ भवन्ति च। ध्वाङ्क्षरासभोश्वाणो गजः सिंहोध्वजोऽनवः। यथो-त्तरबलाः सर्वे ज्ञातव्याः स्वरवेदिभिः। प्रभौ योधे पुरे देशे मित्रनारोस्वकेषु च। बलिनश्वाये भवेल्लाभोन लाभोबलवर्ज्जिते"।

४३ आयचक्रम्—"ध्वजोधूम्रोऽथ सिंहःश्वा सौरभेयः ख-रोगजः। ध्वाङ्क्षश्चेति क्रमेणैव आयाष्टकदिशाष्टके। प्रतिपदाद्द्वितीयादौ तिथिभुक्तिप्रमाणतः। अहो-रात्रे ततः सर्वे यामभुक्त्या भ्रमन्ति च। इन्द्रस्थाने महा-लाभ आग्नेय्यां मरणं ध्रुवम्। दक्षिणे विजयः सौख्यं, नैर्ऋत्यां बन्धनं क्षतिः। वारुण्यां सर्वलाभश्च वायव्यां हानिकारकम्। उत्तरे धनधान्यं च त्वैशान्यां निःफलं मतम्। अतीतं गोहरिध्वाङ्क्षै वर्त्तमानं ध्वजेऽनले। अनागतं परं विद्यात् धूम्र कुक्कुट हस्तिभिः। वृषे ध्वजे समीपस्थं, दूरस्थः गजसिं-हयोः। श्वाने खरे च मार्गस्थो निःफलं धूम्रध्वाङ्क्षयोः। ऐन्द्राग्नेय्यो र्मूलचिन्ता धातोर्द्दक्षिणनैर्ऋतौ। वारु-णयां धातुचिन्ता च जीवचिन्तोत्तरे शिवे"। आया-वर्गाष्टके ज्ञेया दिगष्टकक्रमेण च। स्वोदये मृत्युदं ज्ञेयं सर्वकार्य्येषु सर्वदा"।

४४ विरिञ्चिचक्रम्—"अथातः संप्रवक्ष्यामि सद्यःप्रत्ययका-रकम्। चक्रं विरिञ्चिविख्यातं यत्सुरैरपि दुर्गमम्। कृत्तिका चोत्तरा फाल्गुन्युत्तराषाढभादितः। पङ्क्ति युक्त्या न्यसेद्भानि क्रमेण नवकत्रयम्। वेधोऽपि तिर्य्य-गस्तत्र कर्त्तव्यो नवकत्रये। क्रूरसौम्यैर्ग्रहैर्विद्धं ज्ञेयं तत्र शुभाशुभम्। जन्मसम्पद्विपत्क्षेमं प्रत्यरिः साधको बधः। मित्रातिमित्रगास्तारानव भेदा भवन्ति च। जन्मत्रयस्य वेधेन मृत्युः क्रूरग्रहैर्भवेत्। जयो-लाभः शुभैस्तत्र मिश्रैर्मिश्रफलं मतम्। सौम्योयः शुभतारास्थस्तत्ताराभावपोषकः। दुष्टास्थो दुष्टभावस्ते क्रूरे तस्माद्विपर्य्ययः। जन्मत्रये स्थितः सौरिः क्षेमाये-राङ्कभूमिजौ। मित्रातिमित्रगे सूर्य्ये जायते बधबन्धनम्। जन्मत्रये यदा मन्त्री क्षेमाये बुधभार्गवौ। मित्राति मित्रगे चन्द्रे जयलाभसुखानि च। त्रिपञ्चसप्तताः रोगोत् पत्तिर्यदा तदा। चिरं रोगे स्थितस्तासु क्रूरविद्धासु जायते"।

४५ सप्तशलाकचक्रम्—"तिर्य्यगूर्द्धं गतारेखा सप्तसप्त न्यसे-द्बुधः। कृत्तिकादीनि भान्यत्र साभिजिन्ति क्रमेण च। भुक्तं भोग्यं तथाऽऽक्रान्तं विद्धं पापग्रहेण भम्। शुभा-शुभेषु कार्येषु वर्ज्जनीयं प्रयत्नतः। यस्याभिधान

नक्षत्रं विद्धं क्रूरग्रहेण च । देशग्रामं पुरं सैन्यं नरो नारी विनश्यति"। अधिकमुपयमशब्दे १२६२पृ० द्रष्टव्यम् ।

४६ पञ्चशलाकचक्रम्—"तिर्यगूर्द्ध्वगताः पञ्च द्वे द्वे रेखे च कोणयोः । ईशकोणाग्ररेखायां कृत्तिकां विलिखेद्बुधः। विशाखाकृत्तिकावेधो भरण्याश्चानुराधया । धनिष्ठा सार्पयोर्वेधो मघाश्रवणयोस्तथा । शुभाशुभेषु धिष्ण्येषु विद्धं विवाहे परिवर्जयेत् । यदि विद्धं महादुष्टं क्रूरवेधे महद्भयम्" । अधिकमुपयमशब्दे १२६२पृ० द्रष्टव्यम् ।

४७ चन्द्रचक्रम्—"अर्केन्दुसदृशं चक्रं त्रित्रिशूलसमन्वितम् । मध्ये द्वादश भान्यत्र षट् पृष्ठे नव शूलके । मध्ये शूलस्य मध्यस्थं शशाङ्कक्षमादितः । सव्येन गण्यते चक्रं यावद्‌द्योधस्य नामभम् । षट्के मृत्युर्भयं मध्ये, पृष्ठे भङ्गो महाहवे । चतुरङ्गे जयो कोटे द्वन्द्वे युद्धे विशेषतः" ।

४८ भास्करचक्रम्—"रेखात्रयं त्रिशूलाग्रं तिर्य्यग्रेखाचतुष्टयम्। एकैकाः कोणगास्तत्र मध्याधोभानुभादितः। अग्रस्त्रये भवेन्मृत्युश्चतुर्भिः कोणगैः शुभम् । द्वादश मध्ये संप्रोक्ता नवर्क्षाश्चैव दाहकाः ।"

४९ प्रथममातृकाचक्रम्—"षोड़शोर्द्धगतारेखाः पञ्च रेखाश्च तिर्य्यगाः । कोष्ठकानां भवेद्र षष्टिर्नीलाङ्कस्वरयोजना । पश्चिमादिविलोमस्थान् लिखेत् प्रतिपदादिकान् । तदधो मातृकालेख्या ङञणान्त्यस्वरोज्झितान् । संस्थाप्य नामवर्णाङ्कान् मात्राभेदेन संयुतान् । मुनिभि(७)स्तु हरेद्भागं पश्चात् ज्ञेयं शुभाशुभम् । मात्राधिके भवेल्लाभो मात्राहीने पराजयः । मातृकायाः प्रभेदोऽयं तस्मात् ज्ञेयः प्रयत्नतः" ।

५० द्वितीयमातृकाचक्रम्—"द्वादशोर्द्ध्वगता रेखाः पञ्च रेखाश्च तिर्य्यगाः । मातृकाप्रस्तरे तत्र षण्डान्त्यस्वरवर्ज्जितान् । कोष्ठकाधोलिखेदङ्कान् पञ्च युग्मं त्रिकं त्रयम् । षड्द्वयमष्टकं त्रीणि नवकैकं तथैव च । नाम वर्णस्य या संख्या मात्रासंख्या तथैव च । पिण्डिता नवभिर्भक्ता जयोमात्राधिके रणे ।"

५१ तृतीयमातृकाचक्रम्—"भानुमार्त्तण्डदोर्वीणतिर्य्यग्द्विरसदिग्गजाः । नवाङ्कास्तद्वशः स्थाप्याः पञ्चस्वरकखादितः । ङञणोना हकारान्ता नवधा कोष्ठकक्रमैः । नाममात्राक्षराङ्कैक्यसम्प्रयोगेऽधिके जयः" ।

"भूबाणादित्यदोर्वीणतिथिवेदाब्धिदिग्शरान् । वसुनन्दान्तकान् लिख्य षट्कोष्ठितमातृकाम् । पुन्नामवर्णमात्राणामङ्कयोगेऽष्टशेषके । मात्राधिके जयो युद्धे मात्राहीने पराजयः" पाठान्तरम् ।

५२ विजयचक्रम्—"अथ सारतरं वक्ष्ये लम्पटाचार्य्यभाषितम् । जयपराजयौ येन नामोच्चारणतः स्फुटम् । लग्नालग्नप्रभेदेन घोषाघोषक्रमेण च । प्रवेशनिर्गमाभ्यां च चक्रं जयपराजयम् ।"

५३ श्येनचक्रम्—"श्येनचक्रं समालिख्य पक्षिरूपं सुशोभनम्। चञ्चुपे भानुभं दत्वा अष्टाविंशतिभं लिखेत् । कटे कं चञ्चुकोटिस्थं शीर्षे नेत्रे त्रिकं त्रिकम् । पादे पृष्ठे चतुष्कं च उदरे नव भानि च । नाम ऋक्षं स्थितं यत्र फलं तस्य वदाम्यहम् । चञ्चुग्रे बधबन्धाय नामर्क्षं च यदा भवेत् । लाभः शीर्षोदरे नेत्रेऽशुभं स्यात् पादपृष्ठयोः ।"

५४ तोरणचक्रम्—"नाडीचतुष्टयं चक्रं लिखित्वा तोरणाकृति । न्यसेद्भानि सूर्यभादि प्रवेशे निर्गमे तथा । स्तम्भमूले स्थितान्यष्टौ सिंहद्वारे तथाष्टकम् । मालायामष्टकं चैव चतुर्धिष्ण्यानि तोरणे । निर्गमे चन्द्रमा यत्र प्रवेशे यत्र भास्करः । तत्र काले शुभा यात्रा विपरीता च हानिदा । चन्द्रःप्रवेशकूटस्थो निर्गमस्थो दिवाकरः । बधबन्धनदा यात्रा प्रवेशे तत्र शोभना। चन्द्रादित्यौ प्रवेशस्थौ अथ वा निर्गमे स्थितौ । मिश्रं फलं भवेत्तत्र प्रवेशे वाऽथ निर्गमे । क्रूरग्रहयुतश्चन्द्रः प्रवेशे वाऽथ निर्गमे । तद्दिने भूभुजां चैव निषिद्धा राजपट्टिका । शुभग्रहयुते चन्द्रे सिंहद्वारभसंस्थिते । प्रवेशः पट्टबन्धश्च भूभुजां शोभनः स्मृतः । स्तम्भे सौरिन्दिपं हन्ति सिंहे स्वचक्रविग्रहः । मालास्थिते बलं राज्यं तोरणे सर्वसिद्धिदः" ।

५५ अहिचक्रम्—"अहिचक्रं प्रवक्ष्यामि यथा शम्भुभाषितम् । द्रव्यं शल्यं तथा शून्यं येन जानन्ति साधकाः । निधिर्धिवर्त्तनैकस्थः सन्धानो यत्र गर्त्तके । तत्र चक्रमिदं स्थाप्यं स्थानद्वारमुखस्थितम् । ऊर्द्ध्वरेखाष्टकं लेख्यं तिर्य्यक् पञ्च तथैव च । अहिचक्रं भवत्येव अष्टाविंशतिकोष्ठकम् । अहिगत्या च नक्षत्रे तत्काले यत्र चन्द्रमाः । द्रव्यं शल्यं भवेत्तत्र चन्द्रभास्करसंक्रमे । तत्र पौष्णाश्विन्यार्य्यर्क्षकृत्तिकामभाग्यकम् । उत्तराफाल्गुनी लेख्यं पूर्व्वपङ्क्त्यां भसंचकम् । अहिर्बुध्न्याजपादर्क्षे शतभं ह्याद्रसर्पभम् । पुष्यं हस्तं समालेख्यं द्वितीयपङ्क्तिसंस्थितम् । विधिं

विष्णुं धनिष्ठाख्यं सौम्यं रौद्रं पुनर्वसुम्। चित्रभं च तृतीयायां पङ्क्तौ वै धिष्ण्यसप्तकम्। विश्वभं तोयभं मूलं ज्येष्ठां चैवविशाखके। स्वातीं पङ्क्त्यां चतुर्थ्यां च हस्ताख्यं प्रविलोकयेत्। एवं प्रजायते चक्रे प्रस्तारः पन्नगाकृतिः। द्वारस्तम्भे मघायाम्ये द्वारस्था कालिका ततः। अश्विन्यादित्रिकञ्चाथ आर्द्रादिपञ्चकं तथा। रेवती पूर्वभाद्रेन्दोः पूर्वाषाढचतुष्टयम्। शेषाणि भानुभान्यत्र प्रोक्तानि सप्तसंख्यया। यथाङ्के चन्द्रभे द्रव्यं शल्यं भवति सूर्य्यभे। उदयादिगतानाड्यो भश्चन्द्राःषष्ट्याप्रभेदकं। दिनेन्दुभुक्तयुक्तोऽसौ भवेत् तत्कालचन्द्रमाः। यद्दैर्भुक्तानि धिष्ण्यानि स्वस्वभैर्गुणयेत्ततः। भुक्तपादकलायोज्याः षष्ट्या भाकं ततो-हरेत्। लब्धस्य त्रिंशता भागो ग्रहाःस्युः राशिपूर्वकाः। अश्विन्यादीन्दुभुक्तानि भानि पञ्चहतानि च। स्वभुक्त नाडीसंयुक्तं हिन्नं नन्दहृतं त्रिधा। दिनेन्दुभुक्तभागाद् जायन्ते चेष्टकालिकाः। चन्द्रवत् साधयेत्-सूर्य्यस्फुटस्थं चेष्टकालिकम्। पश्चात् विलोकयेत् तौ च स्वस्फुटौ खाद्यभे स्थितौ। चन्द्रार्कौ च यदाऽर्केन्दु तदास्ति निश्चितं निधिः। भानुस्फुटौ-गतौ द्वौ च तदा शल्यं न संशयः। खस्व भे द्वितयं शेषं नास्ति किञ्चिद्विपर्य्यये। स्थितं न लभ्यते द्रव्यं चन्द्रे क्रूरग्रहान्विते। पुष्टे चन्द्रे भवेत्पुष्टः क्षीणे चन्द्रेऽल्पको निधिः। ग्रहदृष्टिवशात् सोऽपि विज्ञेयो नवधा बुधैः। नवांशकानुमानेन भूमानं तस्य कल्पयेत्। कालमानेन तत्संख्या धातुस्थानं निरीक्षणैः। हैमं तारं च ताम्रं च रत्नं कांस्यायसं त्रपु। चन्द्रे नागं विजानीयाद् भास्करादिग्रहेक्षिते। मिश्रंमिश्रं भवेद्द्रव्यं शून्यं दृष्टिविवर्जिते। सर्वग्रहेक्षिते चन्द्रे निर्दिष्टोऽसौ महानिधिः। हैमं तारञ्च ताम्रं पाषाणं स्वर्णमयायसम्। स्वर्यादिदृष्टकृते चन्द्रे द्रव्यभाण्डं प्रजायते। भुक्तराश्यंशमानेन भमानं कायिकैः करैः। नीच निम्नः परे नीचजलस्थोऽसौ महानिधिः। स्वोच्चस्थे चाद्ध्र्वगं द्रव्यं नवांशकक्रमेण च। कोष्ठद्वयं परित्यज्य लेख्या मेषादयः क्रमात्। प्रश्नलग्नाधिपो यत्र तत्र द्रव्यं विनिर्दिशेत्। परमोच्चे परे तुङ्गे भित्तिस्थस्वस्वसंक्रमे। चन्द्रांशभुक्तिमानेन द्रव्यसंख्याभिधीयते। वक्राद्द्विगुणा वृद्धिः षड्वर्गे तु वलक्रमात्। अभिजितं

भवेत् द्रव्यं यत्र चन्द्रो ग्रहान्वितः। तदधिष्ठायको-ज्ञेयो भास्करादिग्रहक्रमात्। ग्रहं स्वल्पग्रहं चैव क्षेत्रपालं च मातृकाम्। दीपेशं भीषणं रुद्रं यक्षं नागं विदुः क्रमात्। ग्रहे होमः प्रकर्त्तव्यो स्वल्पे मायराक्षो बलिः। क्षेत्रपाले सुरामांसं मातृकायां महाबलिः। दीपेशे दीपिकापूजा भीषणे भीषणार्चनम्। रुद्रे च रुद्रियोजाप्योयक्षे यक्षादिशान्तयः। नागे नाग महाःपूज्या गणनाथेन संयुताः। अद्ध्रोध्वरादितत्त्वानि सर्वकार्य्येषु पूजयेत्। निर्वृत्तैनैकमध्ये च सम्भ्रान्तो यत्र भूतले। तत्र चक्रं लिखेद्धीमान् द्रव्यशल्यस्य निर्णयम्। एवं कर्मविधाने तु अबाध्यो निधिराप्यते। निधिं प्राप्य नरा लोके वन्दनीया न संशयः"।

५६ चन्द्रस्फुटोन्नतिचक्रम्—"मीनमेषोदयश्चन्द्रः सततं दक्षिणोत्तरा। उत्तरोत्तरशेषेषु समत्वं वृषकुम्भयोः। विड्वरं स्यात् समे चन्द्रे दुर्भिक्षं दक्षिणोन्नते। ईति रोगं भयं शूले सुभिक्षं तूत्तरोन्नते"।

५७ जीवचक्रम्—"शीर्षे राज्यं चतुर्भिर्भवति खलु करे दक्षिणे ऽथोचतुर्भिः पीड़ां षड्भिः पदस्थैर्वतिरपि च भवेद्वामहस्ते चतुर्भिः। कण्ठे चैकेन भूतिमदन-शरमितैश्चाक्षि प्रीतिलाभः स्याच्चेत्स्यैस्त्रिभिरपि ग्रसमसुखं वाक्पतेश्चक्रमेतत्"।

५८ लाङ्गलचक्रम्—"लाङ्गलं दण्डिकायुक्तं योक्त्रद्वयसमन्वितम्। दण्डिकादि लिखेद्भानि दिनेशाक्रान्तभादितः। दण्डिकाहलयुक्तानां द्विद्विस्थाने त्रिकं त्रिकम्। योक्त्रयोः पञ्चकं सव्यगणना चक्रलाङ्गले। दण्डस्थे च गवां हानिर्युगस्थे स्वामिनो भयम्। लक्ष्मीलाङ्गलयोत्रस्थे लेतारम्भो दिनक्षये"। "त्रिकं त्रिकं त्रिकं पञ्च त्रिकं पञ्च द्विकं द्विकम्। अशुभानि शुभानि स्युश्चक्रे लाङ्गल संज्ञके" क्वचिदधिकः पाठः।

५९ वीजोप्तिचक्रम्—"सूर्य्यभादुरगं स्थाप्य त्रिनाड्याक्रान्त नरं क्रमात्। मुखे त्रीणि गले त्रीणि भानि द्वादश चोदरे। पुच्छे त्रयं बहिः पञ्च दिनभात् फलं वदेत्। वदने पुलाकं विद्यात्कण्ठेऽङ्गारकस्तथा। उदरे धान्य-वृद्धिश्च पुच्छे धान्यक्षयो भवेत्। ईतिरोगभयं बाह्ये चक्रे वीजोप्तिसम्भवे"।

६० वृषचक्रम्—"वृषचक्रं वृषाकारं सर्वावयवसंयुतम्। लिखित्वा विन्यसेद्भानि वृषनामर्क्ष पूर्वकम्। मुखाक्षि-कर्णशीर्षेषु स्कन्धके द्विकं द्विकम्। त्रीणि पृष्ठे द्विकं

